आचार्यविष्णुगुप्तविरचितं

# कौटलीयार्थशास्त्रम्

पञ्चटीकोपेतम्

( द्वितीयभागस्य प्रथमं सम्पुटम् )

सम्पादकः

आचार्यश्रीविश्वनाथशास्त्रिदातारः

सम्पूर्णानन्द संस्कृत विश्वविद्यालयः

वाराणसी

SARASVATĪBHAVANA-GRANTHAMĀLĀ
[ Vol. 130 ]

# KAUṬALĪYAMARTHAŚĀSTRAM

OF

ĀCĀRYA VIṢṆUGUPTA

[ VOLUME TWO, PART ONE ]

With Four Commentaries

## 'ŚRĪMŪLĀ'

BY

T. GAṆAPATI ŚĀSTRĪ

## 'CĀṆAKYAṬĪKĀ'

BY

ŚRĪ BHIKṢUPRABHAMATI

## 'PRATIPADAPAÑCIKĀ'

BY

ŚRĪ MADBHAṬṬASVĀMĪ

&

## 'NĪTINIRṆĪTI'

BY

ŚRĪ YOGGHAMĀCĀRYA

EDITED BY
ŚRĪ VIŚVANĀTHA ŚĀSTRĪ DĀTĀRA
Ex. Head of Department,
Prācīnarājaśāstrārthaśāstra-Department
Sampurnanand Sanskrit University
Varanasi



VARANASI
1991

Research Publication Supervisor—
Director, Research Institute,
Sampurnanand Sanskrit University
Varanasi.

[ Published under the Rare Texts Publication Scheme of Sarasvati Bhavana Library with financial assistance provided by University Grants Commission.]

Published by—
Dr. Harish Chandra Mani Tripathi
Publication Officer,
Sampurnanand Sanskrit University
Varanasi—221 002.

Available at—
Sales Department,
Sampurnanand Sanskrit University
Varanasi—221 002.

First Edition, 1000 Copies
Price Rs. 160·00

Printed by—
VIJAYA PRESS,
Sarasauli, Varanasi,

सरस्वतीभवन-ग्रन्थमाला

[ १३० ]

आचार्यविष्णुगुप्तविरचितं

# कौटलीयमर्थशास्त्रम्

## [ द्वितीयभागस्य प्रथमं सम्पुटम् ]

म० म० टी० गणपतिशास्त्रिकृतया 'श्रीमूला'व्याख्यया

श्रीभिक्षुप्रभमतिकृतया 'चाणक्यटीका'व्याख्यया

श्रीमद्भट्टस्वामिकृतया 'प्रतिपदपञ्चिका'व्याख्यया

श्रीयोग्घमाचार्यकृतया 'नीतिनिर्णीति'व्याख्यया च

विभूषितम्

सम्पादकः

'शास्त्ररत्नाकर'श्रीविश्वनाथशास्त्रिदातारः

पूर्वविभागाध्यक्षः,

प्राचीनराजशास्त्रार्थशास्त्रविभागस्य

सम्पूर्णानन्दसंस्कृतविश्वविद्यालये

वाराणसी




वाराणस्याम्

२०४८ तमे वैक्रमाब्दे १९१३ तमे शकाब्दे १९९१ तमे खैस्ताब्दे

अनुसन्धानप्रकाशनपर्यवेक्षकः—
निदेशकः, अनुसन्धान-संस्थानस्य
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालये
वाराणसी।

□

[ सरस्वतीभवनपुस्तकालयस्य प्रकाशनसम्बन्धिविशेषयोजनान्तर्गतं
विश्वविद्यालयानुदानायोगतः प्राप्तवित्तीयसाहाय्येन प्रकाशितम् ]

□

प्रकाशकः—
डॉ० हरिश्चन्द्रमणित्रिपाठी
प्रकाशनाधिकारी,
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य
वाराणसी–२२१ ००२.

□

प्राप्तिस्थानम्—
विक्रय-विभागः,
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य
वाराणसी–२२१ ००२.

□

प्रथमं संस्करणम्, १००० प्रतिरूपाणि
मूल्यम्— १६०=०० रूप्यकाणि

□

मुद्रकः—
विजय-प्रेस,
सरसौली, वाराणसी।

# प्ररोचना

बहोःकालात् प्रतीक्ष्यमाणा दिवङ्गतैः **पण्डितराजराजेश्वरशास्त्रिद्राविडैः** सम्पादिता कौटलीयार्थशास्त्रकृतिरधुना प्रकाश्यतामानीयत इति महान्तं परितोषमनुभवामि। आजीवनं पण्डितवर्यैरस्य महतो ग्रन्थस्य वैदिकसिद्धान्तानुसारं निर्वचने प्रायाति। श्रीयोग्घमाचार्यप्रणीता **'नीतिनिर्णीतिनाम्नी'** प्राचीना टीका, श्रीगणपतिशास्त्रिभिर्विरचिता **'श्रीमूला'** टीका, श्रीभिक्षुप्रभमतिकृता **'चाणक्यटीका'**, श्रीमद्भट्टस्वामिप्रणीता **'प्रतिपदपञ्चिका'** टीकाश्चाप्यत्र सङ्गृहीताः। आसां टीकानां समुच्चयेनार्थशास्त्रग्रन्थस्य गूढा अर्थाः सुखं ग्राह्याः।

खेदस्यायं विषयः पण्डितराजानां परिश्रमं तेषां जीवनकाले मुद्रणावसरं नालभत। तेषां प्रमुखैः शिष्यैः **श्रीविश्वनाथशास्त्रिदातारैः** पाण्डुलिपेष्टीकाभिः संयोजनं सादरं सपरिश्रमं च सम्पन्नम्।

अनया भूमिकया सर्वांशतः सह ऐक्यमत्यमादधानोऽपि अस्याः प्रौढिं सोपपत्तित्वञ्च प्रशंसितुमर्हामि। प्रस्तुतस्यार्थशास्त्रसंस्करणस्येदमेव वैशिष्ट्यं यत्तस्य निर्वचनस्य सर्वे पक्षाः समुद्घाटिताः। तेन विदुषां स्वकीयमतनिर्धारणे सौकर्यं भविष्यति। श्रीदातारशास्त्रिणो द्वौ सहयोगिनौ **श्रीजगन्नाथशास्त्रितैलङ्ग-श्रीलक्ष्मीकान्तखनङ्गौ** आस्ताम्। तयोः श्रमोऽधुना सफलः।

कौटलीयमिति अभिधानमधुना विदुषां बहुतरेणादरास्पदम्। कौटलीयमित्येवाभिधानमाद्रियन्ते बहुशो बुधाः। कुटलगोत्रे विष्णुगुप्तस्य जातत्वात् कौटल्यस्य कौटलीयस्योपपन्नत्वात्। भवतु, कौटिलीयमर्थशास्त्रं कतिभिश्चित् पाश्चात्यैः छलयुक्तिप्रधानं राजशास्त्रमिति मन्यते; किन्तु शास्त्ररीत्या समग्रपरीक्षणेन चायं भ्रम एव प्रतीयते। यतो हि भ्रम एवास्य शास्त्रस्य मूलम्। राज्ञा विद्याविनीतेनैव वर्तितव्यमिति प्रोक्तवता कौटल्येनैवमुक्तम्—**"श्रुताद्धि प्रज्ञोपजायते, प्रज्ञया योगः, योगादात्मवत्ता, इति विद्यासामर्थ्यम्"**।

अनेन वचनेन स्वतःसिद्धं कौटलीयार्थशास्त्रस्य आत्मविद्यामूलत्वम्। वस्तुतो दृष्टस्यादृष्टस्य च, लौकिकस्य लोकोत्तरस्य च, दैहिकस्य आत्मिकस्य च जगतः पार्थक्यं शास्त्रकारैर्न विचीयते स्म। एतादृशोरुभयोर्युग्मयोः परस्परमुपकारित्वमेवाभिमतमस्ति। पण्डितराजकृतः श्रम इममेवार्थं समुपपादयतीति नो हर्षः।

मन्ये, कौटलीयार्थशास्त्रस्य प्रस्तुतं संस्करणं प्राचीनराजशास्त्राध्ययने काञ्चन नूतनां सरणिं विवरिष्यति। साम्प्रतं चतुर्षु खण्डेषु विभक्तोऽयं ग्रन्थः प्रकाश्यतां गच्छतीति महते परितोषाय। अत्र संलग्नाः सर्वे पण्डिता अभिनन्दनार्हाः।

**विद्यानिवासमिश्रः**
कुलपतिः
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

**वाराणस्याम्,**
**मौनी-अमावास्यायाम्,**
**२०४७ वैक्रमाब्दे**
**(१५-१-१९९१ ख्रैस्ताब्दे)**

# प्राक्कथनम्

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयेन सरस्वतीभवनस्थानां महत्त्वपूर्णानामप्रकाशितानां पाण्डुलिपीनां मुद्रणाय तथा दुर्लभानां मुद्रितग्रन्थानां पुनः प्रकाशनाय चैका योजना पञ्चमपञ्चवर्षीययोजनायां विश्वविद्यालयानुदानायोगसमक्षं प्रेषिताऽऽसीत्। आयोगेन च नियोजितस्य निरीक्षकमण्डलस्य संस्तुतिमनुसृत्य प्रकाश्यमानग्रन्थानां महत्तां चोररीकृत्य स्वीकृतिः प्रदत्ता। अस्यां प्रक्रियायां वर्षद्वयं व्यतीतम्। अवशिष्टयोजनावधेरल्पत्वात्, अत्रत्यप्रकाशनविभागे कार्यबाहुल्यात्, योजनायाश्च सरस्वतीभवनद्वारा प्रस्तुतत्वात् कार्यस्य शीघ्रमेव सम्पादनार्थं निम्नाङ्कितानां विश्वविद्यालयीयविदुषामेका समितिर्निर्मिता—

**अध्यक्षः**

प्रो० बदरीनाथशुक्लः ( कुलपतिः )

**सदस्याः**

१. प्रो० जगन्नाथोपाध्यायः ( पालिविभागाध्यक्षः, श्रमणविद्यासङ्कायाध्यक्षश्च )
२. श्रीव्रजवल्लभद्विवेदः ( साङ्ख्ययोगतन्त्रागमविभागाध्यक्षः )
३. डॉ० भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री' (निदेशकः, अनुसन्धानसंस्थानस्य)
४. श्रीबलिरामशास्त्री भारद्वाजः ( उपपुस्तकाध्यक्षः, हस्तलिखितानुभागे )
५. श्रीजनार्दनपाण्डेयः ( सरस्वतीभवनस्थः )
६. श्रीलक्ष्मीनारायणतिवारी ( पुस्तकाध्यक्षः, समितेः संयोजकः )

संयोजकस्य श्रीलक्ष्मीनारायणतिवारिणः सततप्रयत्नेन अनया समित्या प्रकाशनार्हग्रन्थानां चयनम्, तेषां सम्पादनव्यवस्था, मुद्रणव्यवस्था च तत्परतया सम्यक् प्रारब्धा।

सम्पाद्यमानग्रन्थेषु संस्कृतपालिवाङ्मयस्य प्रायः समस्तप्रमुखविषयाणां महत्त्वपूर्णाः समुपयोगिनश्च ग्रन्थास्समावेशिताः, तत्तत्सम्पादनकार्यभारो विश्वविद्यालयस्य विद्वद्भ्यः, सम्बद्धविषयाणां कतिपयेभ्यो बहिष्ठविद्वद्भ्यश्च समार्प्यत।

अस्यामेव योजनायां प्रकाश्य प्रस्तूयत इदं कौटलीयमर्थशास्त्रं बहुभिरतिप्रसिद्धटीकाटिप्पणीसंवलितम्, **शास्त्ररत्नाकरविश्वनाथशास्त्रिदातारेण** सम्पादितम्।

अर्थशास्त्रं हि पूर्वाचार्यैर्भारतदेशस्य सुखशान्तिसमृद्धये त्रिवर्गोन्नतये च निर्माय राष्ट्रस्य पुरतः समुपस्थापितम्। तद् अतिविस्तृततया दुरूहं जातम्, तत्रत्याः कतिपयेंऽशा उत्सन्नकल्पा अभूवन्निति कामसूत्रादिनिर्दिष्टहेतुभिर्ज्ञायते। आचार्यः कौटल्यः सम्पूर्णम् अर्थशास्त्रं वेदञ्च अधीत्य वैदिकमर्यादाया लोकयात्रासाधनत्वञ्चानुभूय तत्सङ्ग्रहभूतमेकम् अर्थशास्त्रं निर्मितवान्। यदर्थमुपजीव्य रामराज्यं धर्मराजराज्यं चन्द्रगुप्तमौर्यराज्यं च स्वर्णयुगायते। तदिदमर्थशास्त्रं पञ्चदशाधिकरणं सार्धशताध्यायं साशीतिप्रकरणशतं षट्सहस्रश्लोकात्मकमुपलभ्यते। तस्येयं प्रतिज्ञा "पृथिव्या लाभे

**पालने च···इदमर्थशास्त्रं कृतम्"** (कौ० अ० १।१) इति। तच्च सर्वेष्वपि देशेष्वद्यावधि उत्कृष्टतमं चकास्तीति सर्वैराधुनिकैर्विपश्चिदपश्चिमैरपि सत्क्रियते।

अस्यार्थशास्त्रस्य परम्परायामध्ययनाध्यापनद्वारा कतिपयाष्टीका अपि बभूवुः, याः समवलोक्य जयमङ्गलाभिधेयां टीकां **श्रीशङ्करार्यो** निर्मितवानिति तट्टीकातो ज्ञायते। इयं टीका केवलं प्रथमाधिकरणे उपलब्धा १९५८ ई० वर्षे प्रकाशिता। **श्रीगणपतिशास्त्रिभिः** १९२४ ई० वर्षे अनन्तशयने राजकीयमुद्रणालये सम्पादनपूर्वकं 'श्रीमूला'ख्या स्वरचिता टीका प्रकाशिता।

'नीतिनिर्णीति'नाम्नी टीका **श्रीयोग्घमाचार्यविरचिता** २०१६ वै० संवत्सरे मुम्बापुरीस्थभारतीयविद्याभवनतः सिन्धीजैनग्रन्थमालाद्वारा प्राकाशि। एतट्टीकात्रितयसत्त्वेऽपि न्यायव्याकरणादिशास्त्राध्ययनपरम्परावद् अर्थशास्त्राध्ययनपरम्परा भारतदेशे समभूदिति न दृश्यते। अत उत्कृष्टतममिदमर्थशास्त्रमधिकृत्य 'प्राचीनभारतीयशासनपद्धतिप्रभृतिष्वनेकेषु ग्रन्थेषु विद्वद्भिर्नैके आक्षेपा उद्भाविताः! यतोऽस्य अप्रामाण्यं जनेषु जागर्ति। तन्निरासाय **"विश्वविद्यालय-अनुदान-आयोगेन"** इदमनुभूतं यत् स्वसाहाय्येन पदवाक्यप्रमाणपारावारीणा विद्वांसोऽर्थशास्त्रव्याख्यानाय प्रेरणीयाः। प्रातस्स्मरणीया गुरुचरणाः पद्मभूषणादिविविधविरुदावलीसमलङ्कृताः श्रीमतः **स्व० पण्डितराजराजेश्वरशास्त्रिद्रविडमहाभागाः** संस्कृतविश्वविद्यालयाधिकारिभिः एतदर्थं सानुरोधं प्रार्थिताः। एतैर्द्वादशवर्षाधिकवर्षमर्थशास्त्रमधीत्य राजनीतिवर्गं संस्थाप्य विद्यार्थिनोऽध्यापिताः। ततः 'वैदिकसिद्धान्तसंरक्षिणी'ति नाम निधाय अर्थशास्त्रं व्याख्यातम्। प्रायः अष्टमशताब्द्यां शङ्करार्यैः(शङ्कराचार्यैः) निर्मितां 'जयमङ्गलाम्' अधिकृत्य आधुनिकविद्वदुद्भाविताः शङ्का आन्वीक्षिकीद्वारेण निरस्य क्रोडपत्रमपि व्याख्यातम्।

अधीतेषु विद्यार्थिवृन्देषु शास्त्ररत्नाकरादिभूषाभूषणैः **पण्डितश्रीविश्वनाथशास्त्रिदातारैरधीत्य** गुरुचरणकृतं व्याख्यानम् अन्याश्च टीका हृदयङ्गमय्य तन्निर्देशानुसारेण 'वैदिकसिद्धान्तसंरक्षिणी-जयमङ्गलाक्रोडपत्रयोः' सङ्कलनं सम्पादनञ्च विहितम्। एतट्टीकाद्वयोपेतं 'श्रीमूला'दिटीकात्रितयसहितमर्थशास्त्रं प्रथमाधिकरण आदितः पञ्चमाध्यायान्तं विदुषां पुरत उपायनीक्रियते। आशास्यते यद् विद्वद्वरेण्या ग्रन्थरत्नमिदमादितोऽन्तपर्यन्तं समवलोड्य अधीति-बोधाचरणप्रचारणैः सर्वसाधारणजनेषु रुचिमुत्पाद्य एतद्देशस्य सुखशान्तिसमृद्धये सहयोगं प्रदास्यन्ति।

विस्तृतं टीकाग्रन्थं दातारशास्त्रिभिः सङ्क्षिप्य भूमिकायां सर्वोऽपि विषयः समालोचितः, यत्र नीतिलक्षणादिकं सर्वं स्फुटीभवति, भवति च शङ्कानां समाधानमपि। विश्वस्यतेऽग्रिमं सम्पुटमप्यचिरेण प्रकाशमेष्यति।

**वाराणस्याम्,**
कार्तिकपूर्णिमायाम्,
वि० सं० २०३७
(२२-११-१९८० ख्रैस्ताब्दे)

**बदरीनाथशुक्लः**
तदातीन्तनः कुलपतिः
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

## सम्पादकीयं वक्तव्यम्

भारतवर्षस्य अभ्युन्नतिः वेदेन 'न मे स्तेनो जनपदे' इत्यादिना प्रदर्शिता। तत्परम्परा एतद्देशे पूर्वतनराज्येषु वंशपरम्परायां समुदीयते स्म। साम्प्रतं तु अस्यां शताब्द्यां विशेषतो भारतदेशे वर्तमानामशान्तिमनुरुद्ध्य तन्निवारणोपायं चिन्तयद्भिः श्रीगुरुदेवैः श्रीमद्भिः पण्डितराजराजेश्वरशास्त्रिद्रविडचरणैः राजशास्त्रचिन्तन-प्रचारणं विना देशे शान्तिर्न भविष्यतीति ज्ञात्वा प्रथमतो जयमङ्गलासहितः कामन्दकीय-नीतिसारः अमलनेरनगरस्थपुस्तकागारात् सम्प्राप्तः। तत्र 'विद्याप्रतिबद्धत्वाल्लोक-स्थितेः' इत्युपलभ्य श्रीचरणैः राजनीतिं पर्यालोचयितुं राजनीतिवर्गो वाराणसेये रामघट्टस्थिते व० शा० साङ्गवेदविद्यालये महाराजश्रीकाशीनरेशसान्निध्ये तत्कालीन-बिहारराज्यपालश्रीअणेकरकमलद्वारा पञ्चविंशतिवर्षेभ्यः पूर्वं संस्थापितः। तत्र स्व० गुरुवर्य हरिरामशास्त्रिशुक्ल-गणपतिशास्त्रिहेब्बार-रामचन्द्रशास्त्रिहोसमने-जयरामशास्त्रिशुक्ल-स्व० नटराजऐय्यरप्रभृतिभिः सह अहमपि प्रविष्टः। तत्र गुरुचरणैः महता श्रमेण नीतिसारः कण्ठस्थोकृत्य समुपस्थितनैकविधप्रश्नजालसमाधानपुरस्सरम् अध्यापितः। तत्र तत्र देशान्तरेषु गत्वा तैरस्माभिश्च राजशास्त्रं व्याख्यानमालाभिः संश्रावितं प्रसारितं च। सर्वेषां श्रोतॄणां रुचिं ज्ञात्वा 'राजनीतिशास्त्र का दिग्दर्शन', 'शान्ति का अग्रदूत' इति पुस्तकद्वयं प्रकाशितम्।

ततो गुरुभिः जयमङ्गलादिटीकोपेतं कौटलीयमर्थशास्त्रमध्यापितम्, तत्रोपवर्णितेन विषयेण अस्माभिः सर्वैरपि निरणायि यद् भारतदेशे वर्णाश्रमप्रधाने समेषामेकरूपता-सम्पादकं सत्त्वं धृतिभावापरपर्यायम् आसीत्, अस्ति च। एतदाश्रयं विना क्वचिदपि सुखं शान्तिः समृद्धिभ्रातृभावेन सर्वेषां सम्प्रदायानां मानवानां वाऽस्तित्वं च न भवितु-मर्हति। एतच्छास्त्रनिर्देशानुसारेण देशे विद्याप्रचारकार्यमेव नैतिकं प्राथमिकं कार्यं विदुषाम्, इति विज्ञाय अर्थशास्त्रस्य चर्चा पुनरपि चर्चिता। तत्र अनेकविधाः शङ्का आधुनिकैः समुपस्थापिताः, आन्वीक्षिकीमीमांसामर्यादया कार्यकारणभावविवेचनपुरस्सरं समाहिताः। एतदेवानुरुद्ध्य रामायण-महाभारत-पुराणादिग्रन्था अपि यदि समा-लोच्येरन्, तर्हि समाजस्य आन्ध्यं व्यपगतं भवेदिति ज्ञात्वा राजनीतिवर्गे प्रविष्टैः स्वकार्यारम्भः समालोचितः। तदानीमेव तत्कालीनकुलपतिश्रीसुरतिनारायणमणि-त्रिपाठिभिः साहाय्यं सम्प्रदाय विशेषतया प्रोत्साहिता गुरुचरणाः। ततः श्रीगौरीनाथ-शास्त्रिभिरुपकुलपतिभो राजनीतिवर्गे स्वयमुपस्थाय अर्थशास्त्रमधिकृत्य निबन्धः प्रकाशितो भवत्विति अभिप्रायः प्रकटितः। नवीनग्रन्थनिर्माणेऽस्माकं सामर्थ्यमननुभूय गुरुशिष्यसंवाद एव ग्रन्थरूपेण प्रकाशनीय इत्यपि अभ्यधायि। ततः पुनरपि आदितः अर्थशास्त्रं गुरुचरणैरध्यापितं व्याख्यानमालारूपेण। तत्र प्रथमाधिकरणे चतुर्दशा-ध्यायान्तमेव अध्ययनाध्यापनयोर्महान् समयः समतिक्रान्तः। तस्य सम्पादनं सङ्कलनञ्च

अनेन शरीरेण कर्तव्यमस्तीति गुरुचरणानामादेशः समभूत्। तमनुरुद्धय परिश्रम-पुरःसरम् उक्तसंवादस्य सङ्कलनम् अनेकैः वर्षैः कृतमद्य विदुषां सेवायां कथञ्चन समुपस्थापयितुं प्राभवम्।

अर्थशास्त्रकर्ता चाणक्यस्तस्मिन् समये प्रादुर्भूतः, यत्र नीतिशास्त्रस्य विलोप-प्रसक्त्या सह देशे सत्त्वगुणस्योन्मूलनमेव प्रसक्तमासीत्। अनेनैवाचार्येण सर्वाणि शास्त्राणि चतुरो वेदानधीत्य सत्त्वोन्मूलनकारणमनुशील्य आन्वीक्षिक्या सह त्रय्यादिविद्यानां संस्थापनं कृतम्। राज्यञ्च धर्मप्रधानं व्यवस्थापितम्, यद्धि ऐतिहासिकानां मतानु-सारेणापि स्वर्णयुगायते स्म। अनेनैव सिद्धयति यद् अनेन आचार्येण पाटलिपुत्रमवस्थाय चन्द्रगुप्तं मौर्यं राज्यपदे समभिषिच्य स्वयं शमप्रधानः सन् सत्त्वमेव संस्थापितवान्। सोऽयमाचार्य इतः पूर्वं चतुर्विंशतिवर्षशतकपूर्वमवनीतलं भूषयामासेति न्यायवार्तिक-भूमिकाकर्तृभिः उद्धृतात् चतुर्विंशतितमतीर्थङ्करजैनाचार्यवाक्याद् उन्नीतम्। अर्थशास्त्रस्य पदानि गुरुपरम्पराध्ययनाभावाद् दुरवगाहानीति ज्ञात्वा गुरुचरणैः अर्थशास्त्रस्य टीकाः सङ्कलिताः। तासु समग्रस्य अर्थशास्त्रस्य टीका स्व० म० म० पं० त० गणपतिशास्त्रिभिः प्रणीता दृष्टा।

एते काञ्चिमण्डलपतेः श्रीमूलरामवर्ममहाराजस्य कृपापात्राणि स्वं व्याख्यानं श्रीमूलेतिनाम्ना सम्पादितवन्तः।

जयमङ्गलानाम्नी टीका मद्रप्रान्ते प्रकाशिता। इयं कामन्दकीयटीका-वाक्यसादृश्यात् प्रामाणिकत्वाच्च शङ्करार्यैरेव विरचितेति मन्यते। सापि केवलं प्रथमाधिकरण एव प्रकाशनभावं प्राप्ता। नीतिनिर्णीतिरपि केषुचित्स्थलविशेषेषु तदीयाभिप्रायं द्योतयति। सा सिन्धीजैनग्रन्थमालायामाचार्यजिनवरमुनिवरसङ्गृहीता उपलब्धा। एषैव स्वकीयपाठाख्याने सामग्री अभूत्।

एतदर्थशास्त्रस्य समस्तटीकासहितस्य प्रकाशनं अशक्यप्रायमस्तीति मन्वान एवासम्; परं श्रीजगन्नाथोपाध्याय–(पालिविभागाध्यक्षः) प्रभृतिविदुषां प्रोत्साहनमुपलभ्य वर्तमानश्रीकुलपतिभिरेतत् प्रकाशनं प्रतिज्ञायाहमादिष्टस्तदर्थम्।

अस्य समग्रस्य प्रकाशनं भागत्रयेण कर्तव्यम्। एकस्मिन् भागे सम्पुटद्वयं भविष्य-तीत्यपि निर्णीतं गुरुचरणैः, कृतस्य व्याख्यानस्य अतिदीर्घत्वात्।

एतत्कार्यसम्पादने श्री पू० महाराजैः श्रीविभूतिनारायणसिंहमहाभागैः कृतेन प्रोत्साहनेन एतावद्दूरम् अहमागत इति तेषामुपकृतिं स्मरामि।

श्रीगुरुचरणव्याख्यानस्य सङ्कलितस्य शुद्धिः स्व० गुरुचरणैर्हरिरामशास्त्रिभिः शुक्लमहाभागैः सम्पादिता। तथैवाग्रे तैर्विधास्यत इत्याशायां स्थितस्तेषां वियोगेन खिन्नमनास्तेषां चरणौ स्मरन् तदुक्तिं शरणं मन्यमान आसम्।

एतत्सामग्रीसम्पादने साहाय्यं साङ्गवेदविद्यालयाध्यक्षैः **श्रीरामचन्द्रशास्त्रि-होसमनेमहाभागैः** पुस्तकं प्रदाय कृतम्, तथा गुरुपुत्राभ्यां **श्रीविश्वेश्वरशास्त्रि-गणेश्वरशास्त्रिभ्यां** पितृचरणानां कृतिः प्रकाश्यतां प्राप्नोतीति श्रुत्वा महता हर्षेण सर्वविधमपि साहाय्यं प्रादायीति तेषां समेषां उपकृतिं सर्वान् सभाजयामि ।

मूलपाठं विभज्य तत्र तत्र शीर्षकं तदेव स्थापितं यद् एन्० एस्० वेङ्कटाचार्यैर्विद्वद्भिः संयोजितमिति तानपि स्मरामि एतत्प्रसङ्गे । **श्रीटोणपेगोपालाचार्यैस्तु** प्रकाशनाय पुस्तकमेवार्थशास्त्रस्य समर्पितम् । इयं तेषामुपकृतिरपि स्मरणीया वर्तते ।

सम्पादन-प्रकाशनकार्ये च **श्रीलक्ष्मीकान्तशास्त्रिखनङ्ग–श्रीजगन्नाथशास्त्रि-तैलङ्गाभ्यां** महान् परिश्रमः कृतो वर्तते । तदधमर्णतां भजमानस्तयोरुपकृतिं स्मरामि ।

अस्य प्रकाशने प्रमादाद् अज्ञानाद् मुद्रकदोषाद् असौष्ठवाद् असामर्थ्याच्च अशुद्धयो जाताः प्रकाशनानन्तरमुपलब्धा वर्तन्ते । तदर्थं क्षमस्वेत्युक्ति विनाऽन्य उपायो नास्ति । इयं प्रथमावृत्तिः, तत्र दोषा भविष्यन्त्येवेति ज्ञात्वा विद्वांसः पाठं शोधयित्वा अधीतिबोधाचरणप्रचारणैः समन्वेष्यन्तोमां कृतिमित्याशास्य विश्वेश-गुरुचरणौ नमन् विरमामीति ।

विदुषां वशंवदः

**विश्वनाथशास्त्रिदातारः**

# विषयानुक्रमणिका

## अथाध्यक्षप्रचारो नाम द्वितीयमधिकरणम्

### एकोनविंशं प्रकरणम्

#### प्रथमोऽध्यायः (जनपदनिवेशः) ३-२२


| विषयाः | पृष्ठाङ्काः |
|---|---|
| १. राष्ट्ररचनाविधिः | ३-९ |
| २. क्षेत्रपरिकल्पनाविधिः | १० |
| ३. क्षेत्रेषु कृषिसौकर्यपरिकल्पनम् | ११-१२ |
| ४. अनुकूलस्थानकल्पनं तदनुकूलसेतुबन्धनविधिश्च | १३-१४ |
| ५. भरणीयानां सङ्क्षेपः | १५ |
| ६. उत्पथगामिनां गृहस्थसंन्यासिनां दण्डविधिः | १६-१७ |
| ७. स्वदेशवासानर्हाणां परिगणनम् | १८ |
| ८. ग्रामेषु विनोदस्थाननिषेधः | १९ |
| ९. राजकर्तव्यसङ्ग्रहः | २०-२२ |


### विंशं प्रकरणम्

#### द्वितीयोऽध्यायः ( भूमिच्छिद्रविधानम् ) २३-३१


| विषयाः | पृष्ठाङ्काः |
|---|---|
| १. अकृष्यभूमेः साफल्यकरणम् | २३-५ |
| २. ओषधिवनहस्तिवनयोः विधानम् | २५ |
| ३. हस्तिरक्षणविधिः | २६ |
| ४. हस्तिसञ्चारसीमादिपरिज्ञानम् | २७-२९ |
| ५. हस्तिरक्षणफलम्, हस्तिभेदाश्च | २९-३१ |


### एकविंशं प्रकरणम्

#### तृतीयोऽध्यायः (दुर्गविधानम्) ३२-५६


| विषयाः | पृष्ठाङ्काः |
|---|---|
| १. राष्ट्रान्तेषु चतुर्विधदुर्गनिर्माणविधिः | ३२-३३ |
| २. राष्ट्रमध्ये स्थानीयदुर्गरचना | ३४ |
| ३. स्थानीयपरिखानिर्माणम् | ३५-३६ |
| ४. वप्रविधानम् | ३७ |
| ५. प्राकारनिर्माणम् | ३८-३९ |
| ६. अट्टालकादिपरिकल्पनविधिः | ४०-४२ |
| ७. परिखाबहिः रथ्यापरिकल्पनम् | ४३ |
| ८. महाद्वारविधानम् | ४४-५१ |
| ९. द्वारान्तरविकल्पः | ५२-५३ |
| १०. कुल्यापरिकल्पनम् | ५४-५६ |


### द्वाविंशं प्रकरणम्

#### चतुर्थोऽध्यायः (दुर्गनिवेशः) ५७-६६


| विषयाः | पृष्ठाङ्काः |
|---|---|
| १. वास्तुविभागक्रमः | ५७ |
| २. वीथीविभागास्तत्परिणामविशेषाश्च | ५८ |
| ३. राजभवनपरिकल्पनम् | ५९-६१ |
| ४. पुरमध्ये बहिश्च देवालयनिर्माणम् | ६२-६५ |
| ५. चतुरङ्गसैन्ये निर्वाहकशूरजनप्राचुर्यस्यावश्यकता | ६५ |
| ६. दुष्टानामावासव्यवस्था | ६५-६६ |

## त्रयोविंशं प्रकरणम्

### पञ्चमोऽध्यायः (सन्निधातृनिचयकर्म) ६७-७४


१. सन्निधातुः कर्तव्याणि ६७
२. कोषगृहनिर्माणविधिः ६७-६९
३. पण्यगृहनिर्माणविधिः ६९-७०
४. कोशगृहादीनां लक्षणविधिः ७०
५. रत्नादीनां सङ्ग्रहविधानम्, वञ्चकानां दण्डश्च ७१-७२
६. कोषचोराणां दण्डः ७३
७. अध्यायसारः ७३-७४


## चतुर्विंशं प्रकरणम्

### षष्ठोऽध्यायः (समाहर्तृसमुदयप्रस्थापनम्) ७५-८६


१. समाहर्त्रा चिन्तनीया अंशाः ७५
२. दुर्गपदार्थः ७५-७६
३. राष्ट्रखनिपदार्थौ ७६-७७
४. सेतुवनपदार्थौ ७७-७८
५. व्रजवणिक्पथपदार्थौ ७८
६. आयमुखानि ७८
७. व्ययशरीरम् ७९
८. कालविभागः ८०
९. करणीयादिषट्कम् ८०
१०. करणीयादीनां निर्वचनम् ८१-८२
११. आयविभागः ८३
१२. व्ययविभागः ८४-८५
१३. नीवीपदार्थः ८५
१४. परिकरश्लोकः ८५-८६


## पञ्चविंशं प्रकरणम्

### सप्तमोऽध्यायः (अक्षपटले गाणनिक्याधिकारः) ८७-१०१


१. शालानिर्माणविधिः ८७
२. पुस्तकेषु लेखनीयांशाः ८८-९०
३. अध्यक्षपदवीनियोजनम् ९०-९१
४. वेतनदानोपयोगिसंवत्सरविभागः ९१
५. चारद्वारा देशवृत्तान्तज्ञान-स्यावश्यकता ९२-९३
६. धनहानिसम्भवे मतभेदेन दण्डनिर्देशः ९३
७. अध्यक्षाणां वार्षिकगणित-प्रदर्शनकालः ९४-९५
८. त्यक्तस्वस्वकर्मणोर्दण्डः ९६-९७
९. गणनलेखनपरिपाट्यः ९८-९९
१०. दुष्टवृत्तानां गणकादीनां दण्डः ९९-१००
११. राज्ञो हितोपदेशसारः १००-१०१


## षड्विंशं प्रकरणम्

### अष्टमोऽध्यायः (समुदयस्य युक्तापहृतस्य प्रत्यानयनम्) १०२-११८


१. धनसङ्ग्रहावश्यकता १०२
२. कोषस्य नव उदयहेतवः १०२
३. अष्टौ कोषक्षयहेतवः १०३-१०५
४. अध्यक्षाणां चत्वारिंशद्धरणोपायाः १०६-११३
५. द्रव्यापहरणशङ्कायां प्रश्नपूर्वकं सत्यांशपरिज्ञानम् ११४-११५
६. दुष्कार्यसूचकानां सत्यत्वे सम्मा-ननम्, अन्यथा दण्डः ११६-११७
७. परिकरश्लोकः ११७-११८

## सप्तविंशं प्रकरणम्

### नवमोऽध्यायः (उपयुक्तपरीक्षा) ११९-१३३


१. अध्यक्षाणां शक्तिपरीक्षाक्रमः ११९-१२१
२. कर्मकराणां निग्रहोऽनुग्रहश्च १२२
३. राजकीयद्रव्याणां कर्मकरकृत-भक्षणादिज्ञाने उपायद्वयम् १२२-१२३
४. व्ययेषु अनुमेया अनर्थाः, तदर्थं दण्डस्तत्परिहारश्च १२३-१२५
५. त्रिविधाः कुपुरुषाः १२६-१२८
६. ससाक्षिकव्यवहारस्य युक्तता, उत्तराध्यक्षयोस्तच्छिष्य-योग्यताश्च १२९
७. अधिकरणकल्पनविधिः १२९
८. कर्मकरैरर्थभक्षणस्य दुष्परि-हार्यता दुर्ज्ञेयता च १३०-१३१
९. अर्थभक्षकाणां शिक्षाः, प्राज्ञानामुत्तेजनञ्च १३२-१३३


## अष्टाविंशं प्रकरणम्

### दशमोऽध्यायः (शासनाधिकारः) १३४-१६१


१. शासनम्, लेखनयोग्यता, लेखनक्रमश्च १३४-१३८
२. लेखनगुणाः १३९-१४१
३. वर्णपदवाक्यानि १४२-१४४
४. लेखने समासकरणमुपसंहार-क्रमश्च १४५-१४६
५. लेखनीया अर्थाः १४७-१४९
६. अष्टौ शासनभेदाः १५०
७. तत्र प्रज्ञापनालेखः १५०
८. आज्ञालेखः १५१
९. परिदानलेखः १५१-१५२
१०. परिहारलेखः १५३
११. निसृष्टिलेखः १५३
१२. प्रावृत्तिकम् १५४
१३. प्रतिलेखः १५५
१४. सर्वत्रगः १५५
१५. उपायनिर्देशः १५६
१६. साम्नः पञ्च प्रभेदाः १५६-१५८
१७. दानभेददण्डाः १५९
१८. लेखनदोषाः १५९-१६०
१९. निगमनम् १६१


## एकोनत्रिंशं प्रकरणम्

### एकादशोऽध्यायः (कोषप्रवेश्यरत्नपरीक्षा) १६२-२०२


१. कोषाध्यक्षद्वारा रत्नादि-स्वीकारक्रमः १६२
२. मौक्तिकभेदाः १६३-१६६
३. पञ्च यष्टिभेदाः १६६-१७०
४. मणिगुणोपक्रमः १७१
५. मणिषु पञ्च माणिक्यभेदाः १७१
६. अष्टौ वैडूर्यभेदाः १७२
७. अष्टौ इन्द्रनीलभेदाः १७२
८. चत्वारः स्फटिकभेदाः १७३-१७४
९. एकादश मणिगुणाः १७५
१०. सप्त मणिदोषाः १७५
११. अवान्तरजातिमणिभेदाः १७६
१२. वज्रमणेः आकरप्रदेशाः, उत्पत्तिस्थानानि च १७७-१७८

१३. वज्रवर्णाः १७८
१४. वज्राणामुत्तमाधमत्वम् १७९
१५. प्रवालानि १८०
१६. सारेषु चन्दनम् १८१-१८३
१७. अगुरुः १८४-१८५
१८. तैलपर्णिकस्य योन्यादिकम् १८६
१९. भद्रश्रीयस्य योन्यादिकम् १८६
२०. कालेयकस्य योन्यादिकम् १८७
२१. फल्गुषु पञ्चदशविधा चर्मजातिः १८८-१९१
२२. चर्मगुणाः १९२
२३. चर्मणां संस्थानकृता भेदाः १९२-१९३
२४. तेषु प्रशस्ताः १९४
२५. नेपालदेशीयमेषरोमनिर्मित-वस्त्रभेदाः १९४
२६. षड्विधं मृगरोमजम् १९५
२७. त्रिप्रकारं दुकूलम् १९५-१९६
२८. पट्टसूत्रभेदाः १९७
२९. कार्पासिकेषु उत्तमानि १९८
३०. निगमनम् १९९-२०२

## त्रिंशं प्रकरणम्

### द्वादशोऽध्यायः (आकरकर्मान्तप्रवर्तनम्) २०३-२२८

१. आकरस्थानपरीक्षा २०३-२०४
२. लोहधातुषु सुवर्णहेतुरसानां निर्देशः २०५
३. ताम्रत्वादेः सुवर्णत्वापादक-रसलक्षणम् २०६
४. शिलाजतुवैलक्षण्यम् २०७
५. त्रिविधा भूमिप्रस्तरधातवः २०८
६. अष्टादश रूप्यधातवः २०९
७. सर्वधातूनां साराधिक्यम् २१०
८. अशुद्धधातूनां शोधनप्रकारः २११
९ सुवर्णरूप्ययोः मार्दवोपजनक-प्रकारः २१२
१०. मार्दवापायकरप्रकारः २१३
११. ताम्रधातुः २१३
१२. सीसधातुः, त्रपुधातुः, तीक्ष्णधातुः, वैकृन्तकधातुश्च २१४
१३. मणिधातुः २१५
१४. आकरद्रव्याणां सदुपयोगः २१६
१५. आकरकर्मणां प्रवर्तनम् २१७
१६. लोहाध्यक्षव्यापारः २१८
१७. लक्षणाध्यक्षव्यापारः २१९
१८. रूपदर्शककर्तव्यम् २२०-२२१
१९. खन्यध्यक्षस्य कर्तव्यम् २२२
२०. लवणाध्यक्षस्य कर्तव्यानि, आगन्तु-लवणविषये विशेषः २२२-२२५
२१. विलवणविषये, भक्तलवणविषये, लवणक्षारवर्गविषये च विशेषः २२५
२२ आकरेषु प्रधानद्रव्यसङ्ग्रहः २२६-२२८

## एकत्रिंशं प्रकरणम्

### त्रयोदशोऽध्यायः (अक्षशालायां सुवर्णाध्यक्ष) २२९-२५१

१. सुवर्णाध्यक्षस्य कर्तव्यम् २२९-२३०
२. देशवर्णभेदेन सुवर्णभेदः २३०
३. योनिगुणभेदेन सुवर्णभेदः २३१-२३२
४. सुवर्णशोधनप्रकारः २३२-२३३
५. रूप्यभेदाः, रूप्यगुणाश्च २३४
६. शुद्धस्य रूप्यस्य लक्षणम् २३४
७. शुद्धसुवर्णस्य षोडशवर्णकाः २३५

८. सुवर्णस्य निकषपरीक्षा, वर्णकपरीक्षा, व्याजनिकषितम्, उपाधिः, गुणाश्च २३६-२३७
९. निकषगुणाः २३८
१०. छेदैस्तापैश्च सुवर्णपरीक्षा २३८
११. रूप्यसुवर्णयोरुन्मानविधिः २३९
१२ अक्षशालाया पालनविधिः २३९-२४०
१३ कर्मभेदा अक्षशालायाम् २४१
१४. शुद्धकाचकर्म २४१
१५. मिश्रकाचकर्मविधिः २४२
१६. त्वष्ट्रकर्म २४३
१७. तपनीयकर्म २४४
१८. रूप्यम् २४५
१९. अशुद्धस्य रूप्यस्य शोधनप्रकारः २४५-२४६
२० रागयोगः २४६-२४७
२१. शुद्धसुवर्णस्य मुद्गवर्णता २४८-२४९
२२. चतुर्दश कनकगुणाः २५०-२५१

## द्वात्रिंशं प्रकरणम्

### चतुर्दशोऽध्यायः ( विशिखायां सौवर्णिकप्रचारः ) २५२-२७३

१. सौवर्णिकस्य कर्तव्यम्, शिल्पिशालीयानां कर्तव्यम्, अन्यथादण्डश्च २५२-२५३
२. अर्पितसुवर्णादेः प्रतिग्रहकाले वर्णादिपरीक्षा २५४
३. संस्कारमये न्यूनीभावार्हा भागाः २५५
४ वर्णादिह्रापकानाममार्गव्यवहारिणाञ्च दण्डाः २५६-२५७
५. षड्विधानि शिल्पिकर्माणि, पञ्चापहरणोपायाश्च, तत्र तुलाविषमम् २५८
६. अपसारितसारद्रव्याणि, सारद्रव्यापहरणमार्गश्च २५९-२६०
७. विस्रावणम् २६१
८. पेटकस्तत्परीक्षा च २६२-२६४
९. पिङ्कस्तत्परीक्षा च २६५-२६६
१०. अपहरणावकाशविरोधाय जात्यादिज्ञानम् २६७
११. कृतभाण्डपरीक्षणविषयं हरणोपायचतुष्टयम् २६८
१२. परिकुट्टनादिसमयपातितद्रव्यपरिमाणेयत्तानिर्णयोपायः २६९-२७०
१३. अन्ये सप्तदश हरणोपायाः २७१
१४. राजतेषु दुष्टानि २७२
१५. निगमनम् २७२-२७३

## त्रयस्त्रिंशं प्रकरणम्

### पञ्चदशोऽध्यायः ( कोष्ठागाराध्यक्षः ) २७४-२९५

१. कोष्ठागाराध्यक्षस्य कर्तव्यानि २७४
राष्ट्रम्, क्रयिमम्, परिवर्तकः, प्रामित्यकम्, आपमित्यकम्, सिंहनिका, अन्यजातः, व्ययप्रत्यायः, व्याजी, उपस्थानञ्च २७५-२७८
२. धान्यादिवर्गः—स्नेहाः, क्षारवर्गः, लवणवर्गः, मधु च २७९
३. शुक्तवर्गः, फलाम्लवर्गः, द्रवाम्लवर्गः, कटुकवर्गः, शाकवर्गश्च २८०-२८१
४. स्नेहादिवर्गोपयोगः २८२

५. धान्यानां वृद्धिक्षयप्रमाणानां प्रत्यक्षीकरणम् २८३
६. क्षुण्णाः, धृष्टाश्च २८३-२८४
७. पिष्टम्, सिद्धम्, घृष्टम्, तैलम्, सूत्रम् २८५-२८६
८. तण्डुलादिभेदाः २८७-२८८
९. मांससंस्कारे स्नेहादिपरिमाणम् २८९
१०. हस्त्याद्याहारपरिमाणम् २९०-२९१
११. अङ्गारतुषकणविनियोगः २९२
१२. पाकशालाया उपकरणानि २९३
१३. 'विष्टि'कर्मकराः २९३
१४. अध्यायान्तश्लोकः २९४-२९५

## चतुस्त्रिंशं प्रकरणम्

### षोडशोऽध्यायः ( पण्याध्यक्षः ) २९६-३०५

१. पण्याध्यक्षस्य कर्तव्याणि २९६
२. विक्रेयद्रव्यमूल्य-विक्रयस्थानलाभादि-व्यवस्थाः २९७-२९८
३. वणिग्भ्य उपादेया राजोपदा २९९
४. विक्रयलब्धधनरक्षणनिवेदनादयः ३००
५. परदेशीयद्रव्यविषये लाभ-व्यवस्था ३०१
६. स्थलजलमार्गव्यवहाररीतयः ३०१-३०४
७. परिकरश्लोकः ३०४-३०५

## पञ्चत्रिंशं प्रकरणम्

### सप्तदशोऽध्यायः ( कुप्याध्यक्षः ) ३०६-३१४

१. कुप्याध्यक्षस्य कर्तव्याणि ३०६
२. कुप्यवर्गे सारदारुवर्गः ३०७
३. वेणुवर्गः, वल्लीवर्गः, वल्कवर्गश्च ३०८
४. रज्जुभाण्डम्, पत्रम्, पुष्पम्, औषधवर्गश्च ३०९
५. विषवर्गे स्थावराणि, जङ्गमानि च विषाणि ३१०-३११
६. चर्मादिवर्गः ३१२
७. लोहवर्गे लोहानि, भाण्डम्, अङ्गारादि च ३१३
८. निगमनम् ३१४

## षट्त्रिंशं प्रकरणम्

### अष्टादशोऽध्यायः ( आयुधागाराध्यक्षः ) ३१५–३२८

१. आयुधागाराध्यक्षस्य कर्तव्याणि ३१५-३१६
२. यन्त्राणि, स्थितयन्त्राणि, चल-यन्त्राणि, आयुधानि च ३१७-३२१
३. धनूंषि, ज्याः, इषवः, इषुमुखानि च ३२२
४. खड्गाः, त्सरवः, क्षुरकल्पाः, आयुधानि च ३२३-३२४
५. वर्माणि, आवरणानि, उपकरणानि, कर्म च ३२५-३२६
६. निगमनम् ३२७-३२८

## सप्तत्रिंशं प्रकरणम्

### एकोनविंशोऽध्यायः ( तुलामानपौतवम् ) ३२९–३४२


१. पौतवाध्यक्षस्य कर्तव्याणि ३२९
२. सुवर्णरूप्ययोः प्रतिमानभेदाः, वज्रस्य प्रतिमानञ्च ३३०
३. प्रतिमानसाधनद्रव्याणि ३३१
४. तुलाभेदाः, निर्माणविधानञ्च ३३२-३३३
५. मानविशेषास्तेषां वैलक्षण्यञ्च ३३४-३३६
६. द्रोणाढकादीनि मानानि ३३७
७. मानसाधनानि ३३८
८. तुलानां मानानाञ्च मूल्यम् ३३९
९. तुलामानयोः परीक्षणम्, अन्यथा-दण्डः परीक्षकदेयांशाश्च ३४०
१०. घृतादिगतं मानम् ३४१
११. विनिगमनम्, वारकः, घटिका च ३४२


## अष्टात्रिंशं प्रकरणम्

### विंशोऽध्यायः ( देशकालमानम् ) ३४३-३५५


१. मानाध्यक्षस्य कर्तव्यम् ३४३
२. देशमानानि ३४३
३. रथचक्रविप्रुट्लिक्षा, यूकामध्यः, यवमध्यः, अङ्गुलम्, धनुर्ग्रहः, धनुर्मुष्टिः वितस्तिः, दृढायापौरुषं रामश्शमः, परिरयः परञ्च, अरत्निः, प्राजापत्यो हस्तो वा, पौतवविवीतमानम्, किष्कुः कंसो वा ३४४
४. हस्तः, तक्षणः, क्राकचिककिष्कुः, कुप्यवनहस्तः, व्यामोरज्जुमानम्, खातपौरुषञ्च, दण्डः, धनुर्नालिका पौरुषञ्च, गार्हपत्यं धनुः, दण्डः, रज्जुः, परिदेशः, निवर्तनम्, बाहुः गोरुतम्, योजनम् ३४५-३४६
५. कालमानानि ३४७
६. तुटः, लवः, निमेषः, काष्ठा, कला, नाडिका, मुहूर्तः दिवसः, रात्रिश्च ३४७-३४९
७. छायया कालमानज्ञानम् ३५०-३५१
८. पक्षः, शुक्लो बहुलश्च
मासः—प्रकर्ममासः, सौरः, चान्द्रमासः, नाक्षत्रमासः, मलमासः, अश्वकर्मभृत्यानां वेतनमासः, गजभृत्यानां वेतनमासः ३५२
९. ऋतुः—वर्षा, शरद्, हेमन्तः, शिशिरः, वसन्तः, ग्रीष्मश्च, उत्तरायणम्, दक्षिणायनम्, संवत्सरः, युगम् ३५३
१०. अधिकमासः २५३-३५५


## एकोनचत्वारिंशं प्रकरणम्

### एकविंशोऽध्यायः (शुल्काध्यक्षः) ३५६–३६७


१. शुल्काध्यक्षस्य कर्तव्याणि ३५६
२. कपटवणिजां दण्डाः, असत्यव्यवहारपरिज्ञानञ्च ३५७-३६०
३. निःशुल्कं नेयानि द्रव्याणि ३६१
४. मिथ्याभाषणे दण्डः ३६२
५. अनिर्वाह्यानयने दण्डादयः ३६३

६. राज्यसीमान्तपालानां वेतनं कर्तव्याणि च ३६४
७. सर्वनियुक्तपुरुषहरणनिषेधोपायः ३६५
८. प्रान्तश्लोकः ३६६-३६७

द्वाविंशोऽध्यायः ( शुल्कव्यवहारः) ३६८-३७४

१ शुल्कम् ३६८
२. पुष्पादीनां शङ्खादीनाञ्च शुल्क-व्यवस्था ३६९-३७१
३. द्वाराध्यक्षवेतनं तत्कर्तव्यञ्च ३७१-३७२
४. निगमनम् ३७३-३७४

चत्वारिंशं प्रकरणम्

त्रयोविंशोऽध्यायः ( सूत्राध्यक्षः ) ३७५-३८२

१. सूत्राध्यक्षस्य कर्तव्याणि ३७५
२. कर्मवेतनयोरानुगुण्यम् ३७६-३७८
३. स्त्रीभिः सूत्रनिर्मापणम् ३७९
४. अङ्गीकृतातिक्रमे तासां दण्डः ३८०
५. निगमनम् ३८१-३८२

एकचत्वारिंशं प्रकरणम्

चतुर्विंशोऽध्यायः (सीताध्यक्षः ) ३८३-३९६

१. सीताध्यक्षस्य कर्तव्यम् ३८३
२. दासकर्मकर्तॄणां कर्षणयन्त्रादिभिः सह असङ्गः ३८४-३८५
३ उत्तमसंवत्सरः ३८६-३८७
४. अनुकूलवृष्टिक्रमः ३८८
५. सस्यभेदेन तद्वापकालभेदः (पूर्ववापाः, मध्यवापाः, पश्चाद्वापाः, बीज-वापाश्च) ३८९
६. अकृष्टक्षेत्रकर्षणम् ३८९
७. कृषिकरः ३९०
८. सस्यस्थापनं सस्यविभागश्च ३९१
९. वापयोग्यभूमिः ३९१
१०. बीजसंस्कारः, कृमिकीटाद्युपद्रव-प्रतीकारः, सर्पप्रतीकारश्च ३९२
११. आद्यबीजावापविधिः ३९३-३९४
१२. कर्मकराणां वेतनादि ३९४
१३. स्वयंपतितपुष्पफलादिविनियोगः ३९४
१४. निष्पन्नसस्यानां कोषप्रापणरक्षणादि ३९५-३९६

द्विचत्वारिंशं प्रकरणम्

पञ्चविंशोऽध्यायः ( सुराध्यक्षः ) ३९७-४०७

१. सुराध्यक्षस्य कर्तव्याणि ३९७
२. सुरातत्पात्रयोः बहिःप्रचारदोषाः ३९८
३. सुराव्यवहारफलानि ३९९
४. सुरापात्रीणां रक्षणादिव्यवस्था, मद्यविक्रयिणां कर्तव्यञ्च ३९९-४००
५. मेदकयोगः, प्रसन्नायोगः, आसवयोगः, अरिष्टयोगश्च ४०१
६. मैरेयः, मधुकिण्वश्च ४०२
७. मेदकप्रसन्नयोः सम्भारयोगः, आसव-सम्भारः, श्वेतसुरायोगश्च ४०३-४०४

८. सुराभेदाः, सुरास्वच्छीकरणविधिश्च ४०५
९. उत्सवेषु सुरासन्धानपानयोरनुज्ञा ४०६
१०. स्त्रीबालानां सुराश्रयणादिकर्तव्यम् ४०६-४०७
११. निगमनम् ४०७


## त्रिचत्वारिंशं प्रकरणम्

## षड्विंशोऽध्यायः ( सूनाध्यक्षः ) ४०८-४१२


१. सूनाध्यक्षस्य कर्तव्यानि ४०८-४०९
२. रक्ष्यप्राणिनः अरक्षणे दण्डश्च ४०९-४१०
३. मासविक्रयविधिः ४१०
४. अवध्याः प्राणिनः तद्वधे दण्डश्च ४११
५. अविक्रेयमांसानि ४१२
६. वध्या मृगादयः ४१२


## चतुश्चत्वारिंशं प्रकरणम्

## सप्तविंशोऽध्यायः (गणिकाध्यक्षः) ४१३-४२१


१. गणिकाध्यक्षस्य कर्तव्यम् ४१३
२. वेश्यानां स्थापनं भरणञ्च ४१३
३. वेश्यानां स्थानमानकल्पनम् ४१४
४. गणिकात्वनिर्मोक्षविधिः ४१५
५. वेश्याभिः स्वायव्ययादि, भूषणरक्षणम्, उद्वेजकानां दण्डश्च ४१६
६. अतिकामुकानां दण्डः ४१६-४१७
७. अतिचरन्तीनां वेश्यानामन्येषाञ्च दण्डः ४१८-४१९
८. उक्तार्थानां नटादिष्वपि अतिदेशः ४१९
९. अभ्यस्तकलानां गणिकादीनां सौकर्यम् ४२०
१०. नट्यादिस्त्रीवशीकरणम् ४२१


## पञ्चचत्वारिंशं प्रकरणम्

## अष्टाविंशोऽध्यायः ( नावध्यक्षः ) ४२२-४२९


१. नावध्यक्षस्य कर्तव्यम् ४२२
२. पालनीया अनुग्राह्या ध्वंसनीयाश्च नावः ४२३-४२४
३. नौप्रवर्तनम् ४२४-४२५
४. नियन्त्रणविधिः, तरणदण्डापवादश्च ४२५
५. तरणार्हा जनाः, परदेशादागन्तॄणां व्यवस्थाः, अपराधिनां बन्धनविधिः ४२६
६. तरपण्यविधिः ४२७-४२८
७. तरवेतनकालः ४२९


## षट्चत्वारिंशं प्रकरणम्

## एकोनत्रिंशोऽध्यायः (गोऽध्यक्षः) ४३०-४४२


१. गोऽध्यक्षस्य कर्तव्याणि, वेतनोपग्राहिकम् ४३०
२. करप्रतिकरः ४३१
३. भग्नोत्सृष्टकं भागानुप्रविष्टकञ्च ४३२

४. व्रजपर्यग्रम् ४३२-४३३
५. स्त्रीपशुप्रकाराः ४३३
६. नष्टं विनष्टञ्च, गवादिहन्तॄणामपहर्तॄणां च दण्डः, आहर्तॄणां सम्मानञ्च ४३४
७. गोपालककर्तव्यसङ्ग्रहः कर्तव्यभ्रष्टानां दण्डश्च ४३५-४३६
८. पशुविक्रये अध्यक्षादिदेयम्, दोहनादिकालश्च ४३७
९. क्षीरघृतप्रमाणादि, सेक्तॄणामृषभाणां दुरुपयोगनिषेधः ४३८
१०. गवादिरक्षणम् ४३९
११. गवादीनामाहारः ४४०-४४१
१२. यूथकल्पना ४४१-४४२

## सप्तचत्वारिंशं प्रकरणम्

### त्रिंशोऽध्यायः (अश्वाध्यक्षः) ४४३-४५६

१. अश्वाध्यक्षस्य कर्तव्याणि ४४३
२. अश्वशालापरिकल्पनविधिः ४४४-४४५
३. वडवयोः आहारव्यवस्था ४४६
४. अश्वानामुत्तमत्वादिव्यवस्था ४४७
५. अश्वानामाहारव्यवस्था ४४७-४५०
६. अश्वानां द्विविधं कर्म ४५० (साह्नाय्यम्, औपवाह्यम्, पञ्चधा वल्गनमार्गः (षोडशमार्गाः), लङ्घनम्, (नीचगतमार्गाः), धारणः, (नारोष्ट्रः) ४५१
७. गन्तव्याध्वमानम् ४५२-४५३
८. त्रिविधो गतिभेदः (मार्गाः), पञ्चधा धाराः, तेषां व्यवस्थापकाः ४५३
९. अश्वतोषणकर्तारः सप्त, कर्मातिक्रमे तेभ्यो दण्डः ४५४
१०. अत्रैव गोमण्डलादीनामपि अतिदेशः ४५५
११. अश्वाराधनानि ४५५-४५६

## अष्टचत्वारिंशं प्रकरणम्

### एकत्रिंशोऽध्यायः ( हस्त्यध्यक्षः ) ४५७-४६३

१. हस्त्यध्यक्षस्य कर्तव्यम् ४५७
२. हस्तिशालानिवेशः, हस्तिस्थाननिवेशः ४५८
३. हस्तिनां दिनचर्या, राजग्रहणकालः, अग्राह्या गजाः ४५९
४. गजप्रमाणम्, गजविधाविधिः, उत्तमस्य विधाप्रमाणम् ४६०-४६१
५. गजस्य सप्त शोभाः, गजानां व्यायामविधिः ४६१-४६३

### द्वात्रिंशोऽध्यायः ( हस्तिप्रचारः ) ४६४-४७३

१. शिक्षणभेदेन गजभेदाः ४६४
२. सान्नाह्यः, औपवाह्यः ४६५
३. औपवाह्यस्य उपविचारः ४६५-४६७
४. व्यालः ४६७
५ गजस्य बन्धनाद्युपकरणानि ४६८
६. हस्तिपरिचारकवर्गः ४६९-४७१
७. हस्तिपरिचारकाणां दण्डविधिः ४७१
८. शान्तिकर्मविधिः ४७२
९. गजेभ्यो दन्तग्रहणविधिः ४७२-४७३

## एकोनपञ्चाशपञ्चाशैकपञ्चाशानि प्रकरणानि

### त्रयस्त्रिंशोऽध्यायः (रथाध्यक्षः, पत्त्यध्यक्षः, सेनापतिप्रचारश्च ) ४७४-४८१

१. रथाध्यक्षकर्तव्याणि ४७४
२. रथप्रमाणं रथभेदाश्च ४७५
३. रथानुबन्धिकर्मकरप्रोत्साहनम् ४७६
४ पत्त्यध्यक्षकर्तव्याणि ४७७-४७८
५. सेनापतेः कर्तव्याणि ४७९
६. निगमनम् ४८०-४८१

## द्विपञ्चाशत्रिपञ्चाश-प्रकरणे

### चतुस्त्रिंशोऽध्यायः (मुद्राध्यक्षो विवीताध्यक्षश्च) ४८२-४८६

१. मुद्राध्यक्षस्य कर्तव्याणि ४८२
२. विवीताध्यक्षकार्याणि ४८३-४८४
३. प्राज्ञः शीघ्रवेदनोपायः ४८५
४. निगमनम् ४८६

## चतुःपञ्चाशपञ्चपञ्चाशप्रकरणे

### पञ्चत्रिंशोऽध्यायः (समाहर्तृप्रचारः) ४८७-४९८

१. समाहर्तृकर्तव्याणि ४८७-४८८
२. गोपाधिकारिणां कर्तव्याणि ४८९-४९०
३. स्थानिकस्य कर्तव्याणि ४९१
४. प्रणिधयः ४९२
५. गृहपतिकव्यञ्जनप्रणिधानम् ४९३
६. वैदेहकव्यञ्जनप्रणिधानम् ४९४-४९५
७. तापसव्यञ्जनप्रणिधानम् ४९६
८. निगमनम् ४९७-४९८

## षट्पञ्चाशं प्रकरणम्

### षट्त्रिंशोऽध्यायः (नागरिकप्रणिधिः) ४९९-५१६

१ नागरिकस्य कर्तव्याणि ४९९
२. धर्मावसथिप्रभृतीनां कर्तव्याणि ५००-५०२
३. नगरे गूढचारिणां कर्तव्याणि ५०३
४ अग्निभयप्रतीकारविधिः, प्रतीकाराभावे दण्डश्च ५०४-५०६
५. रथ्यादिकलुषीकरणे दण्डाः ५०७
६. शवनयननियमोल्लङ्घने दण्डाः ५०८
७. रात्री सञ्चारनिषेधः ५०९-५११
८. आरक्षिणां दण्डाः ५१२
९. नागरिकाणां कर्तव्योल्लङ्घने दण्डः ५१३
१० कारागृहनियमाः ५१४
११. निगमनम् ५१५-५१६


॥ इत्यध्यक्षप्रचारो नाम द्वितीयमधिकरणम् ॥

## अथ धर्मस्थीयं नाम तृतीयमधिकरणम्

### सप्तपञ्चाशाष्टपञ्चाशप्रकरणे

### प्रथमोऽध्यायः (व्यवहारस्थापना, विवादपदनिबन्धश्च) ५१७-५३४


१. धर्मस्थानाममात्यानां कर्तव्याणि ५१७
२. अग्राह्या व्यवहाराः, उल्लङ्घने दण्डश्च ५१८
३. अग्राह्यव्यवहारापवादः ५१९-५२०
४. उक्तातिरिक्तानां परतन्त्रकृतानाञ्च अकार्यंकरत्वम् ५२१
५. सर्वापवादः ५२२
६. विवादपदनिबन्धः (पुस्तकलेख्या विवादसम्बद्धा अंशाः) ५२३
७. पराजयहेतवः ५२४-५२५
८. पराजितदण्डः ५२६
९. अपराधिना पालनीया नियमाः ५२७
१०. धर्मप्रवर्तनमेव राजधर्मः ५२८
११. धर्मादिषु राजाज्ञायाः प्राबल्यम् ५२९
१२. व्यवहारविशुद्धेरनिष्टहेतुत्वम्, दण्डप्रशंसा च ५३०
१३. सम्यग्व्यवहारदर्शनस्य परमं दृष्टफलम् ५३१
१४. धर्मशास्त्रस्य न्यायस्य च प्राबल्यम् ५३१
१५. साक्ष्याद्यतिरिक्तानि व्यवहार-साधनानि ५३२
१६. पराजयनिमित्तानि ५३३-५३४


### एकोनषष्टितमं प्रकरणम्

### द्वितीयोऽध्यायः (विवाहसंयुक्तम्) ५३५-५४१


१. विवाहधर्मः ५३५
२. विवाहभेदाः ५३५-५३६
३. स्त्रीधनम् ५३६-५३७
४. स्त्रीधनकल्पः ५३७-५३९
५. आधिवेदनिकम् ५३९-५४०
६. बहुपत्नीनां ऋतुयौगपद्ये अभि-गमनविधिः ५४०
७. अगम्याः स्त्रियः, क्वचिद् गम्यता च ५४०
८. भर्तुरपि क्वचिद् त्याज्यता ५४०-५४१


### तृतीयोऽध्यायः (सुश्रूषादयः) ५४२-५४६


१. शुश्रूषार्हवयोव्यवस्था ५४२
२. स्त्रीभ्यो भरणोपकरणार्पणम् ५४२-५४३
३. वाग्दण्डपारुष्ये द्वेषे दण्डाश्च ५४३-५४४
४. प्रतिषिद्धाचरणे दण्डाः ५४४-५४६
५. निगमनम् ५४६

**चतुर्थोऽध्यायः (निष्पतनादयः) ५४७-५५२**


१. स्त्रियाः पतिकुलाद् निर्गमने तस्यै अवकाशदाने च दण्डाः ५४७
२. अस्यापवादः ५४८
३. पतिगृहाद् निर्गतायाः पुरुषान्तरमनुसरन्त्याः स्त्रिया दण्डाः, तदपवादश्च ५४९
४. ह्रस्वप्रवासः ५५०-५५१
५. दीर्घप्रवासः ५५१
६. निगमनम् ५५२


**षष्टितमं प्रकरणम्**

**पञ्चमोऽध्यायः (दायविभागः, दायक्रमः) ५५३-५५७**


१. कुलधनविभागकालः, विभाज्यं धनम्, तद्गामिनः पुनर्विभागश्च ५५३-५५४
२. प्रमीतधनभागिनः ५५४
३. प्रमीतऋणभागिनः ५५५
४. पुत्राणां समभागिता ५५५
५. बालानूढयोर्विशेषश्च ५५५-५५६
६ पात्रविभागविधिवैय्यर्थ्यम् ५५६
७. अपुत्रादिकधनस्य दायादविभागः ५५६
८. दायादाभावे धनगतिः ५५७
९. अध्यायान्ते श्लोकः ५५७


**षष्ठोऽध्यायः (अंशविभागः) ५५८-५६१**


१ ज्येष्ठमध्यमकनिष्ठांशाः ५५८-५५९
२. भगिनीविषये सन्मनुष्योचितचरित्रहीनविषये च विशेषः ५५९
नानास्त्रीपुत्राणां यमलयोश्च ज्येष्ठव्यवस्था ५५९
३. सङ्करपुत्राणां चातुर्वर्ण्यपुत्राणाञ्च विभागक्रमः ५६०
४. सवर्णासवर्णस्त्र्येकपुत्रविषये विशेषः, तदपवादश्च ५६१


**सप्तमोऽध्यायः (पुत्रविभागः) ५६२-५६६**


१. किं निरूपिता पुत्रता ५६२
२. पुत्रभेदाः ५६२-५६४
३. अनुलोमाः, प्रतिलोमाः ५६४
४. अन्तरालाः ५६५-५६६
५. दायभागविषयनिगमनम् ५६६


**एकषष्टितमं प्रकरणम्**

**अष्टमोऽध्यायः (वास्तुकम्) ५६७-५७०**


१. गृहवास्तुकम्, वास्तुविवादाः, वास्तुपदार्थः, गृहमलोदकप्रसरणव्यवस्था ५६७-६८
२. भ्रमविधिः ५६८
३. चतुष्पदां गृहोपकरणानाञ्च निवेशस्थानानि ५६८
४. गृहाणां परस्परमन्तरालः ५६८-५६९
५. वर्षावातादिबाधापरिहारः ५६९-७०
६. अवक्रीतविषयः, तत्रापवादश्च ५७०
७. सर्वसाधारण्येनानुभाव्याः प्रदेशाः, अनुभवविरोधे दण्डश्च, निगमनम् ५७०

**नवमोऽध्यायः** (वास्तुविक्रयः) ५७१-५७६


१. गृहारामादिक्रयविक्रयार्हता, क्रमश्च ५७१-५७२
२. सीमाविवादस्तत्परिहारोपायाश्च ५७२
३ क्षेत्रविवादस्तत्परिहारोपायाश्च ५७३
४. उक्तक्रमस्य विवादान्तरेष्वपि अतिदेशेन मर्यादास्थापननिगमनम् ५७३
५. विवदमानयोर्द्वयोर्बाधाबाध-व्यवस्था: ५७४-५७५
६. अध्यायान्ते श्लोकः ५७६


**एकषष्टितमद्विषष्टितमे प्रकरणे**

**दशमोऽध्यायः** (विवीतक्षेत्रपथहिंसा समयस्यानपाकर्म च) ५७७-५८३


१. तत्तन्मार्गंरोधं कुर्वतां सेतुकूपादि-विषये अतिक्रमप्रवृत्तिमताञ्च दण्डाः ५७७-५७८
२. क्षेत्रविषये क्रयविक्रयादिव्यवस्था ५७८-५७९
३. ग्रामरक्षणविषये सर्वसहकारा-वश्यकता ५७९
४. पशुप्रचारदेशसंरक्षणव्यवस्था ५८०-५८१
५. समयस्यानपाकर्म ५८१-५८२
६. निगमनम् ५८२-५८३


**त्रिषष्टितमं प्रकरणम्**

**एकादशोऽध्यायः** (ऋणादानम्) ५८४-५९१


१. प्रयुक्तधनविषये वृद्धयंशव्यवस्था ५८४
२. धान्यविषये वृद्धयंशव्यवस्था ५८५
३. धनिकैः वृद्धयंशस्य क्वचिच्च ऋणस्य प्रतिग्रहनिषेधः ५८५-५८६
४. प्रमीतकृतऋणप्रतिनिवर्तकाः ५८६
५. बहुषु ऋणेषु निवर्तनप्राथम्यम् ५८६
६. असाध्यानि ऋणानि, अग्राह्या ग्राह्याश्च ऋणिनः ५८७
७. ऋणसाधनप्रकाराः ५८७
८. साक्षिभावानर्हाः ५८८
९. साक्ष्यनुयोगविधिः—ब्राह्मणानुयोगः, राजन्यानुयोगः, वैश्यानुयोगः, शूद्रानुयोगश्च ५८९
१०. साक्षिवचनविसंवादे कर्तव्यम् ५८९-५९०
११. मिथ्यावादसाक्षिभ्यो दण्डव्यवस्था ५९०-५९१
१२. निगमनम् ५९१


**चतुःषष्टितमं प्रकरणम्**

**द्वादशोऽध्यायः** ( औपनिधिकम् ) ५९२-५९९


१. निक्षेपाप्रत्यर्पणोपाधयः ५९२
२. निक्षिप्तस्य धनस्य दुरुपयोगे दण्डः ५९३
३. चरस्थिरपदार्थानाधीकृत्य धनग्रहणे प्रत्यर्पणव्यवस्था ५९३-५२४
४. आधीकृतस्य दुरुपयोगे दण्डः ५९५
५. याचितकादिविषये व्यवस्था ५९५
६. प्रतिनिधीनां वस्तुविक्रेतृणां नियमाः ५९६

७. शिल्पिहस्तनिक्षिप्तानां सुवर्णादीनां रक्षणोपायाः ५९७
८. शिल्पिनामार्जवज्ञानाय प्रयोक्तव्याः परीक्षाः ५९७-५९८
९. प्रत्यर्पणात्पूर्वं शिल्पिनो मरणे कर्तव्यम् ५९८-५९९
१०. निगमनम् ५९९

## पञ्चषष्टितमं प्रकरणम्

### त्रयोदशोऽध्यायः (दासकर्मकरकल्पः) ६००-६०५

१. आर्याणां दासीकरणे दण्डाः, तदपवादाश्च ६००-६०१
२. आपत्कल्पः, मिथ्याधानकरणे दण्डाः ६०१
३ दत्तमूल्यनाशने आधीकृतविमोचनहेतवः, विशेषे दण्डश्च ६०१-६०२
४. विक्रीतात्मतत्पुत्रयोर्विषये युद्धार्थगृहीतविषये च व्यवस्थाः ६०२
५. अनर्हाणां दासीकरणे दण्डाः ६०३
६ कर्मकरकल्पः, कर्मकरवेतनम् ६०४
७. वेतनदातृकर्मकरयोरनार्जवे दण्डाः ६०४
८. कुलटावेतनम् ६०५

## षट्षष्टितमं प्रकरणम्

### चतुर्दशोऽध्यायः ( कर्मकरकल्पः, सम्भूयसमुत्थानञ्च) ६०६-६१०

१. कर्मकरैः पालनीया नियमाः ६०६
२. कर्मकरस्य कर्मकरणनिरोधे व्यवस्था, परकीयकर्मकारिणां विशेषः ६०७
३. सम्भूयसमुत्थानम्, सङ्घे वेतनविभागः, व्याध्यादीनां कर्मासम्बद्धव्यक्तिविषये व्यवस्थाः ६०८
४. तादृशचोरसङ्घव्यवस्था ६०८-६०९
५. ऋत्विजां लब्धांशभागव्यवस्थाः ६०९-६१०
६. विधिशेषः ६१०

## सप्तषष्टितमं प्रकरणम्

### पञ्चदशोऽध्यायः (विक्रीतक्रीतानुशयः) ६११-६१३

१. क्रेत्रे विक्रीतवस्त्वनर्पणे दण्डाः, तदपवादश्च ६११
२ क्रीतपदार्थानां सकालेऽग्रहणे दण्डाः, अपवादाश्च ६११
३. कम्याप्रतिनिवर्तनकालाः, अवधयः, उपाधयश्च, प्रति प्राणिनां निवर्तनेकालाः ६१२
४. निगमनम् ६१३

## अष्टषष्टितमैकोनसप्ततितमसप्ततितमप्रकरणानि

### षोडशोऽध्यायः (दत्तस्यानपाकर्म, अस्वामिविक्रयः, स्वस्वामिसम्बन्धश्च) ६१४-६१९

१. दास्यमानस्य अप्रधाने व्यवस्था ६१४-६१५
२. अस्वामिविक्रयः ६१५-६१७
३. स्वामिनः स्वत्वनिवृत्तिहेतवः, तदपवादाश्च ६१७
४. आश्रमिप्रभृतिषु परस्परसहानुभूतेरावश्यकता ६१७-६१८
५. वानप्रस्थादिधनभागिनः ६१८
६. मिथ्याचारनिषेधः ६१९

## एकसप्ततितमं प्रकरणम्

### सप्तदशोऽध्यायः (साहसम्) ६२०-६२२


१. साहस्तेययोर्भेदः ६२०
२. साहसस्य रत्नादिविषयकत्वे दण्डः ६२०
३. साहसस्य क्षुद्रद्रव्यविषयकत्वे दण्डाः ६२०
४. साहसस्य स्थूलकद्रव्याणां दण्डाः ६२१
५. साहसकर्मकारयितॄणां दण्डः ६२१-६२२
६. निगमनम् ६२२


## द्विसप्ततितमं प्रकरणम्

### अष्टादशोऽध्यायः ( वाक्पारुष्यम् ) ६२३-६२५


१. वाक्पारुष्यस्य भेदाः, शरीरोपवादे दण्डाः ६२३
२. कुत्सने दण्डाः, तस्य सत्यादि-विषयकत्वे प्रमाणानि च ६२३-६२४
३. प्रकृत्युपवादे श्रुताद्युपवादेषु च दण्डाः ६२४
४. अभिभर्त्संने दण्डाः, विषयभेदेन दण्डभेदाः ६२५


## त्रिसप्ततितमं प्रकरणम्

### एकोनविंशोऽध्यायः ( दण्डपारुष्यम्) ६२६-६३०


१. दण्डपारुष्यभेदाः ६२६
२. स्पर्शने दण्डाः ६२६-६२७
३. अवगूर्णविधिः ६२७
४. प्रहरणदण्डाः ६२७-६२८
५. अतीतकलहादिविषये दुःखनिवेदना-गमनपौर्वापर्यविषये च मतभेदाः ६२८
६. मनुष्यहिंसने पशुहिंसायाञ्च दण्डभेदाः ६२९
७. वृक्षादिच्छेदने दण्डाः ६२९-६३०


## चतुःसप्ततिपञ्चसप्ततितमे प्रकरणे

### विंशोऽध्यायः ( द्यूतसमाह्वयं प्रकीर्णकानि च ) ६३१-६३५


१. द्यूताध्यक्षस्य कर्तव्यम् ६३१
२ विजितपराजितयोर्दण्ड-विशेषाः ६३१-६३२
३. तदध्यक्षैर्नियन्तव्या अंशाः ६३२
४. समाह्वये विशेषः ६३३
५. केचन दण्डोपाधयः ६३३-६३४
६. अनुग्रहाद्युपाधयः ६३५


॥ इति धर्मस्थीयं नाम तृतीयमधिकरणम् ॥

❀ ❀ ❀

श्रीमूला-चाणक्यटीका-

प्रतिपद्पञ्चिका-नीतिनिर्णीति-

नाम्नीभिष्टीका -टिप्पणीभिः

संवलितं

# कौटिलीयमर्थशास्त्रम्

द्वितीयो भागः

* श्रीविश्वेश्वरः शरणम् *

॥ श्रीगुरुः शरणम् ॥

'श्रीमूला'–'चाणक्यटीका'–'प्रतिपदपञ्चिका'-

'नीतिनिर्णीति'-नाम्नोभिष्टीका-टिप्पणीभिः संवलितं

# कौटिलीयमर्थशास्त्रम्

## द्वितीयो भागः

## अथ अध्यक्षप्रचारो नाम द्वितीयमधिकरणम्

## एकोनविंशं प्रकरणम्

### प्रथमोऽध्यायः

[ स्थानीयादिपरिकर्मित-सारक्षिदुर्गपरिवृतसमीप ग्रामवृन्दविशिष्ट-राष्ट्ररचनाविधिः ]

[1]जनपदनिवेशः ।

---

म० म० त० गणपतिशास्त्रिविरचिता

श्रीमूला

अथाध्यक्षप्रचाराख्यम् द्वितीयमधिकरणमारभ्यते । यथोक्तगुणसम्पन्नो राजा सर्वाणि कार्याणि तत्तदध्यक्षद्वारेणैवाध्यक्षयितुं प्रभवतीत्यतोऽध्यक्षांस्तद्व्यापारांश्च-प्राधान्येनाभिधातुमिदमधिकरणम् ।

तत्रेदं प्रथमं सूत्रम्—जनपदनिवेश इति । जनश्चतुर्वर्णाश्रमजातिलक्षणः, पदं तस्य स्थानं स्थानीय-द्रोणमुख-कार्वटिक-सङ्ग्रह-ग्रामादिकं, तस्य निवेशः रचनाऽत्राभि-

---

(नी०) १. जनाश्चातुर्वर्ण्यं ते पद्यन्तेऽवस्थानं कुर्व्वंति यस्मिन् असौ पृथ्वीभागो जनपदस्तस्मिन् चातुर्वर्ण्यादिर्थायोगमव [ स्थापनमिति ] ।

श्रीमूला

धीयत इति सूत्रार्थः । 'स्वाम्यमात्यजनपददुर्गकोशदण्डमित्राणि' प्रकृतिरित्युक्तं तत्र स्वाम्यमात्यप्रकृती प्रतिपादिते, जनपदप्रकृतिरिदानीमभिधीयते ।

## भिक्षुप्रभमतिकृता अर्थशास्त्रव्याख्या

### चाणक्यटीका

एवं विनयोपदेशात् राज्ञः कार्यानुष्ठानयोग्यता प्रतिपादिता । इदानीम् अमात्यादिभिः सह तेन कार्याण्यनुष्ठेयानि । तानि च स्वपरमण्डलाश्रयभेदाद् द्विविधानि । तत्र अन्तरङ्गत्वाद् अन्येषाञ्च कारणत्वात् स्वमण्डलाश्रितान्युच्यन्ते । तान्यपि योगक्षेमभेदाद् द्विविधानि । तत्र योगपूर्वकत्वात् क्षेमस्येति तदभिप्रायकोऽध्यक्षप्रचारउच्यते । स्वगतकार्यानुष्ठानेऽध्यक्षाः प्रचरन्त्यनेनोपदेशेनेति अध्यक्षप्रचारः इत्यधिकरणक्रमः ।

प्रकरणक्रमस्तु राजपुत्ररक्षणादीनि आत्मरक्षान्तर्भूतान्येव प्रकरणानि । तत्र चोक्तम् "रक्षितो राजा राज्यं रक्षति" इति । राज्यञ्च जनपदप्रधानमेव । तस्य च पुरुषवत्तया सामग्रयम् । यथा च वक्ष्यति—"पुरुषवद्धि राज्यम्" ( अधि० ७, अध्या० ११. ) इति । सर्वकर्मणाञ्च उत्तरप्रकरणभाविनां योनित्वात् । तस्मात् तन्निवेश आत्मरक्षानन्तरम् उच्यते । सूत्रसम्बन्धस्तु पृथिव्याख्येय ( ? ) इत्युक्तं पुरस्तात् । पूर्वप्रकरणापेक्षं हि······ना सूत्रम्, उत्तरप्रकरणानुरूपञ्च तदादिसूत्रम् । तयोः स्वप्रकरणे गुणीभूतयोः नापेक्षा । यथा वाक्यावयवानां पदानां वाक्यान्तरावयवानां प्रत्यनपेक्षा, वाक्यद्वयोर्वा अपेक्षा, कथम् अधिकरणावयवानां प्रकरणानां सम्बन्ध इति चेत् प्रकरणान्येव एकार्थानि, अधिकरणं तु अधिकरणमेव, न समुदायान्तरमित्यदोषः ॥

## श्रीयोग्घमाचार्यप्रणीता

### नीति-निर्णीतिटीका

इदानीमध्यक्षप्रचारो द्वितीयमधिकरणमभिधीयते ।·····पृथ्वीभागो जनपदस्तस्मिंश्चातुर्वर्ण्यादेर्यथायोगमवस्थापनमिति सूत्रार्थः ।···रे···जनपददुर्गकोशदण्डादीनामभिधीयत इति महासम्बन्धः । अनन्तरसम्बन्धस्तु तन्त्रावापयोः साधारणत्वादा····· सुप्रतिविहिततन्त्रस्यावापेऽधिकारः । तन्त्रं चाऽध्यक्षप्रचारधर्म्मस्थीयकण्टकशोधनयोगवृत्तपर्यन्तम् तेषामादावधिकरणमध्यक्षप्रचारः । अध्यक्षा इति स्वव्यापारे···नि सावधानतयाऽक्षीणीन्द्रियाणि येषां ते प्रचरन्त्यनेनेत्यध्यक्षप्रचारः । तस्याऽप्यादौ जनपदः सर्वकर्मणां योनिरिति जनपदनिवेश इत्यनन्तरसम्बन्धः । अथवा···राजा राज्यं रक्षतीत्युक्तं च । राज्यं च जनपद एव यस्माज्जनपदादेव सर्वप्रकृतीनामुत्पत्तिः । उक्तं च—

'मात्स्यन्यायाभिभूताः प्रजा मनुं वैवस्वतं राजानं प्रचक्रिरे ।'

पश्चाद्राजा मन्त्रिणमुत्पादयति । जनपदादेव दुर्गं कोशो दण्डश्च । तस्मादेव मित्रव्यवस्था । भूमेरेकान्तरं मित्रमित्येवं, जनपदः शेषप्रकृतीनां योनिस्तस्यादौ लाभः पालनं चाभिधीयते ।

**'भूतपूर्वमभूतपूर्वं वा जनपदं परदेशापवाहनेन स्वदेशाभिष्यन्दवमनेन[२] वा निवेशयेत् ।**

---

श्रीमूला

भूतेत्यादि । भूतपूर्वं पूर्वं स्थितम् अभूतपूर्वं अभिनवं वा, जनपदं, परदेशापवाहनेन परदेशाज्जनानयनेन, स्वदेशाभिष्यन्दवमनेन वा अभिष्यन्दोऽतिवृद्धिः वमनमाहरणं स्वदेशे जनानामतिवर्धनादाधारापर्याप्तिदोषादन्यत्राहरणेन वा, निवेशयेद् रचयेत् ।

चाणक्यटीका

तत्र प्रकरणावताराय सूत्रमाह-भूतपूर्वमिति । भूतः पूर्वो भूतपूर्व इति । अयं शब्दो भवतेः सामान्यशब्दत्वात् शब्दान्तरापेक्षया विशेषं परिगृह्णाति । आढ्यो भूतपूर्व इति यथा, तदिह विशेषशब्दानुपादानात् केन विशेषेण भूतपूर्व इति । तत्र निवेशस्य विधीयमानतया सान्निध्यात् तदपेक्षया निविष्टपूर्वमिति योज्यम् । जनपदशब्दोपात्तो विशेषः, जनाः पद्यन्ते·····अनेन विशेषेण अयं शब्दो देशविशेषे प्रवृत्तः न कान्तारपर्वतादिषु । तेन जनपदत्वेनैव भूतपूर्वमपूर्वं भवति । ( पर ) देशापवाहनेनेति । देशस्था देशाः, तेषामपवाहनं वक्ष्यति—"सुखं वा सानुग्रहपरिहारसौकर्यं फललाभभूयस्त्वेन स्वकर्मणाम्" ( अधि० ७, अध्या० १ ) इत्यादिना । स्वदेशेनाभिस्यन्दसपत्य ( ? ) धान्यपशुमनुष्याद्याधिक्यम् । शरीरस्येव श्लेष्मोद्रेको मा भूत् । अल्पाश्रयत्वादकर्मण्यत्वमिति । तस्य वमनेन अपकर्षणेन । तं प्रस्तारेण अव्यवस्थया वा न निवेशयेत् । किन्तर्हि ? स्थानीयादिकल्पनया ।।

नीति-निर्णीतिटीका

पूर्वं भूतो भूतपूर्वः । निविष्टपूर्व इत्यर्थः । अभूतपूर्वस्तद्विपरीतः । अनिविष्टपूर्वे जनपदशब्दो न प्रवर्तते । पर्वतसमुद्रादौ कथं तस्य निवेश इति चेत्, स्मर्यमाणनिवेशो भूतपूर्वः स्वल्पवीरुल्लतादिसुखसाध्यः, अस्मर्यमाणनिवेशो महावृक्षावलुप्तनिःशेषनिवेशचिह्नो दुःखसाध्य इति भावः । तमुभयस्वरूपम् । परदेशापवाहनेन परदेश इति ।

---

(नी०) १. निविष्टपूर्वं अनिर्विष्ट पूर्वं च । अनिर्विष्टपूर्वे जनपदशब्दो न प्रवर्तते । पर्वतसमुद्रादौ कथं तस्य निवेश इति चेत् स्मर्यमाणानिवेशो भूतपूर्वः [ स्वल्पवीरुल्लतादि सुखसाध्यः । ] अस्मर्यमाणनिवेशो महावृक्षावलुप्त [ निःशेषनिवेशचिह्नो दुःख ] साध्य इति भावः ।

२. स्वदेशाभिष्यंदवमनेन वेति । यथा निर्झरासन्ननिम्ने कालांतरेण निःष्यंदो जलसंग्रहो भवति । तद्वत्ततः प्रजाभिष्यंदः सन्ततिबाहुल्यम् । एकस्मिन्नेव कुटुम्बे पुत्रनप्तृभ्रातृभागिनेयादिबाहुल्यात् । न धान्यादिप्राचुर्यात् । मूलकुटुम्बिमवस्थाप्य शेषाणामपकर्षणं वमनं तेन वा निवेशयेत् ।

**शूद्रकर्षकप्रायं[1] कुलशतावरं[2] पञ्चशतकुलपरं[3] ग्रामं[4] क्रोशद्विक्रोशसीमानमन्योन्यारक्षं[5] निवेशयेत् ।**

**[1]नदीशैलवनभृष्टिदरीसेतुबन्धशाल्मलीशमीक्षीरवृक्षान् अन्तेषु सीम्नां स्थापयेत् ॥**

---

नीति-निर्णीतिटीका

तत्रस्थाः प्रजास्तासामपवाहने नाकर्षणेन । तच्च द्विधा दण्डेन दाहलोपविध्वंसभयदर्शनेन कदाचिदनुग्रहपरिहारप्रदानादिभिः । स्वदेशाभिष्यन्दवमनेन चेति । यथा निर्झरासन्ननिम्ने कालान्तरेण निष्यन्दो जलसङ्गहो भवति । तद्वत्ततः प्रजाभिष्यन्दः सन्ततिबाहुल्यं एकस्मिन्नेव कुटुंबे पुत्रनप्तृभ्रातृभागिनेयादिबाहुल्यात् । न धान्यादिप्राचुर्यात् । मूलकुटुंबमवस्थाप्य शेषाणामपकर्षणं वमनं तेन वा निवेशयेत् । लाभपालनार्थं च निवेशक्रममाह ।

श्रीमूला

शूद्रेत्यादि । ग्रामं, शूद्रकर्षकप्रायं शूद्रकृषीवलबहुलं, कुलशतावरं गृहशतान्यूनं, पञ्चशतकुलपरं पञ्चशतानधिकगृहयुक्तं, क्रोशद्विक्रोशसीमानं क्रोशसीमानं द्विक्रोशसीमानं वा एकस्माद् ग्रामाद् ग्रामान्तरस्य क्रोशदूरव्यवधानं क्रोशद्वयव्यवधानं वा यथा भवेत् तथा क्लृप्तमित्यर्थः, अन्योन्यमारक्षतीत्यन्योन्यारक्षं परस्परसाहाय्यकरणक्षमं, निवेशयेत् ।

नदीत्यादि । सीम्नाम् अन्तेषु, नदी, शैलः शिलाकूटः, वनं, गृष्टिर्बदरा नामौषधिर्वृक्षविशेषो वा, दरी श्वभ्रं, सेतुबन्धः, शाल्मली स्थिरायुराख्यो वृक्षः, शमी सक्तुफला, क्षीरवृक्षः वटादिरित्येतान् स्थापयेत् सीमरक्षार्थम् ।

---

(नी०) १. विष्ट्यादिभिरुपभोग्यत्वात् ।

२. कुलशतभेदे मतभेदस्तथाहि—

चुल्याधाने कुलं विद्यादित्यांभीयाः प्रचक्षते ।
दम्पत्ययोः कुलमित्येके हलं त्वन्ये प्रचक्षते ॥ इति ।

चुल्याधानं—दम्पत्योः क्षेत्र-विभागेऽनंगत्वादेकद्वित्रिहलत्वेन कुलं तदुत्तममध्यमावरतयेष्यते ।

३. अर्धतृतीयकुलशतकृष्यो मध्यमः, सार्द्धक्रोशसीमा भवतीत्यर्थादापद्यते ।

४. शूद्रादिजातिसमूहो ग्रामः ।

५. गोरुतं निशावसाने यावन्तं प्रदेशं गवां रुतं व्याप्नोति । पूर्वस्मात्क्रोशे पश्चिमचिह्नं उत्तरस्मातृक्रोशे [ दक्षिणचिह्नमिति ] ।

१. भृष्टिरिति पा. ।

चाणक्यटीका

शूद्रकषकप्रायमिति। विष्ट्या सञ्जातेन चोपकारित्वात्। कुलशतेनावरं क्रोशसीमानम्। पञ्चभिः कुलशतैः परं प्रकृष्टं द्विक्रोशसीमानम्। अर्थात् अध्यर्ध-क्रोशसीमानं मध्य (म) कुलशतस्य। दाम्पत्यमेकचुल्याधानत्वं एकगृहाधानत्वं वा क्षेत्रविभागं प्रत्यनङ्गभूतम्। तस्माद् एकद्वित्रिहलत्वेन कुलानां कुलत्वम्। चतुः-षड्गवत्वेन च हलत्वमेवेष्यते। षड्गवतया च हलस्य मध्यमा प्रतिप्रत्तिः। तावता विभागेन कुलक्षेत्रयोः अन्योऽन्यप्राकाम्यं भवति। तथा चोक्तम्—

"हलमष्टगवं धर्म्यं षड्गवं व्यावहारिकम्।
चतुर्गवं नृशंसानां द्विगवन्तु गवाशिनाम्॥" इति।

तत्र क्रोशस्थितानि इतरेतरापेक्षया सीमानि यस्य स क्रोशसीमा। यथा पूर्वस्मात् क्रोशे पश्चिमम्, उत्तरस्मात् क्रोशे दक्षिणमिति। चतुर्धा च ग्रामोपभोगः क्षेत्रेण वास्तुना गोप्रचारतया देवतास्थानारामतटाकरथ्योदपानादिभिश्च। धनुस्सहस्र-द्वयं च क्रोशः, चतुर्हस्तंच धनुः। तत्र क्षेत्रप्रतिबद्धत्वात् कुलानां ग्रामार्धं तावद् धनुस्सहस्रं तिर्यग्धनुःसहस्रद्वयेन गुणितं कुलशतेन भिद्यमानं विंशतिर्धनुःसहस्राणि प्रत्येकं कुलस्य क्षेत्रम्। एवं समुदायेन विंशतिर्धनुर्लक्षाणि कुलशतस्य क्षेत्रम्। ततोऽर्धं दशधनुःसहस्राणि अविभागेन साधारणोपयोगित्वाद् देवस्थानादिषु प्रतिकुलं पर्याप्तानि समुदायेन दशधनुर्लक्षाणि। ततोऽप्यर्धं पञ्चधनुःसहस्राणि प्रतिकुलं पशु-प्रचारभूमिः पर्याप्ता समुदायेन पञ्चधनुर्लक्षाणि ततोऽप्यर्धं पञ्चधनुःसहस्राणि प्रत्येकं वास्तुभूमिः इक्षुशाकापरसस्यगृहगोशालादिषु प्रभवति। समुदायेन पञ्चधनुर्लक्षाणि। एवं चत्वारिंशद् धनुर्लक्षणानि। क्रोशसीम्नो ग्रामस्य। द्विक्रोशसीम्नोऽपि चतुर्धनुः-सहस्रेषु तिर्यग्धनुःसहस्रचतुष्कगुणितेषु दशधनुर्लक्षपरिमाणाः षोडशभागाः भवन्ति। तत्र दश भागाः पञ्चानां कुलशतानां क्षेत्राणि। एको भागो देवस्थानादिषु। कुल-प्रवृद्धावपि तावता चरितार्थत्वान्न वर्धते।

तस्मात् साधारणोपभोग्यत्वाद् वृद्धिः प्रत्यन्तभूम्यधिके तु न निवार्यते। क्षेत्रादयस्त्वसाधारणोपभोग्यत्वान्नियम्यन्ते। शेषाः पञ्च भागाः प्रत्येकमर्धविभक्ता वास्तुगोभूमिषु पर्याप्ताः। एवमध्यर्धक्रोशसीम्न्यपि धनुःसहस्रत्रितयेन गुणिते दश-धनुर्लक्षपरिमाणा नव भागा भवन्ति। तत्र पञ्च भागाः अर्धत्रिकुलशतानां (?) क्षेत्राणि परिधि·····षु भागेषु अर्धत्रिकभागाः पुनः प्रत्येकमर्धविभक्ताः गोवास्तुभूमिप्रवि-भागार्थाः। शेषोऽप्यर्धभागः देवस्थानादिषु साधारणोपभोग्यो भवति। अत्र भूम्याधि-क्यान्न निवार्यते वृद्धिः। यथोक्तम्

"ग्रामादर्धं कुलक्षेत्रमर्धार्धं गोनिवासभूः।
धनुः सहस्रमात्रं तु पुण्यस्थानाय शेषयेत्॥
दशभागास्तथा क्षेत्रं पञ्चगोवास्तुभूमिषु।
शेषभागेऽप्यथैकस्तु पुण्यस्थाने विधीयते॥

**अष्टशतग्राम्याः मध्ये स्थानीयं, चतुश्शतग्राम्याः द्रोणमुखं द्विशतग्राम्याः [1]कार्वटिकं, दशग्रामीसङ्ग्रहेण सङ्ग्रहणं स्थापयेत् । अन्तेष्वन्तपालदुर्गाणि जनपदद्वाराण्यन्तपालाधिष्ठितानि स्थापयेत् ।**

**तेषामन्तराणि वागुरिकशबरपुलिन्दचण्डालारण्यचरा रक्षेयुः ।**

चाणक्यटीका

पञ्चभागास्तृतीयेऽपि क्षेत्राण्यर्धंत्रिका अपि ।
वास्तुगोभूमिषु क्षेत्रं शेषं शेषे प्रकल्पयेत् ।।" इति ।

अनया च कल्पनया भूम्या विहितां (?) स्थापयेत्, मा भूत् सीमाविवाद इति ।।

नीतिनिर्णीतिटीका

शूद्रकर्षकप्रायमिति । शूद्रकर्षकबाहुल्यं । विष्ट्यादिभिरुपभोग्यत्वात् । वैश्यकर्षकाः स्वल्पाः, क्षत्रियब्राह्मणौ कर्षकत्वेन नेष्येते धर्म्मार्थक्षतेः । कुलशतावरमिति । कुलशतभेदे मतभेदस्तथाहि ।

'चुल्याधाने कुलं विद्यादित्याम्भीयाः प्रचक्षते ।
दम्पत्यं कुलमित्येके हलं त्वन्ये प्रचक्षत' इति ।।

चुल्याधानदम्पत्ययोः क्षेत्रविभागेऽनंगत्वादेकद्वित्रिहलत्वेन कुलं तदुत्तममध्यमावरतयेष्यते । कुलशतकृष्योऽवरो निकृष्टः क्रोशसीमा । पञ्चकुलशतकृष्यः पर उत्तमः क्रोशद्वयसीमा । सार्द्धद्वयकुलशतकृष्यो मध्यमः, सार्द्धक्रोशसीमा भवतीत्यर्थादापद्यते । तं ग्रामम् । शूद्रादिजातिसमूहो ग्रामः । चतुर्हस्तधनुःसहस्रद्वयं क्रोशः । गोरुमिति पर्याय··( नि ) शावसाने यावत्तं प्रदेशं गवां रुतं कृष्टं व्याप्नोति । तद्गोरुतं क्रोश इति च । पूर्वस्मात् क्रोशे पश्चिमचिन्हमुत्तरस्मात् क्रोशे दक्षिणचिह्नमिति । शेषयोरप्ये····धनुःसहस्रप्रमाण आयामो द्विधनुःसहस्रप्रमाणेन विस्तरेण गुणितश्चत्वारिंशद्धनुर्लक्षप्रमाणं क्षेत्रं··षष्टिलक्षाधिका धनुषां कोटिरिति । न चायं नियमो द्रष्टव्यः, भूमेः सारासारत्वात्··हारिकां ।।

"चतुर्गवं च म्लेच्छानां द्विगवं तु गवाशिनामिति ।। इति ।" दिग्दर्शनमेतत् । ···च ग्रामनिवेशः । गृहक्षेत्रगोप्रचारपुण्यस्थानदिग्विभागेन केचिदित्यत्रापि नियमो निरर्थकः ।
अन्योन्य··।

विवादपरिहारार्थं चिह्नान्याह–नदीशैलवनमिति । भ्रष्टिरिति । पाषाणोपरसिकतादेर्व्या··पर्वतविकार एव । सेतुबन्धः कृत्रिमो जनविदितः । शमीशाल्मलीक्षीरवृक्षग्रहणं चिरस्थायित्वार्थम् । शेषं प्रतीतम् ।

श्रीमूला

अष्टशतेत्यादि । अष्टशतग्राम्याः अष्टशतानां ग्रामाणां समूहस्य, मध्ये स्थानीयं

१. खार्वटिफं पा. ।

**तस्मादमात्यसम्पदोपेतः सर्वसमयवित् आशुग्रन्थः चार्वक्षरो लेखवाचनसमर्थो लेखकः स्यात्। सोऽव्यग्रमना राज्ञस्सन्देशं श्रुत्वा [1]निश्चितार्थं**

चाणक्यटीका

करणलेख्ये स्वविषयगतमधिकारजातं करणीयादि निबन्धेन प्रयच्छेदिति स्वपरविषयगतं च प्रज्ञापनादि परविषयगतं च सन्देशः शासनं स्थितम् इत्याचक्षते। तथा चोक्तम्—'शासनमेवं वाच्यः परः' इत्यादि। तच्च शासनं प्रधानं राज्ञाम्, सन्धिविग्रहयोः तन्मूलत्वादिति। सर्वेषां गुणानाम् उदाहरणतया वा सन्धिविग्रहोपादानम्। नह्यसन्दिशता अलिखिता च सन्धिविग्रहाववधारयितुं शक्यौ इत्येवं ब्रुवता तत्रगतानां कार्याणां शासनमूलत्वमुक्तं बोद्धव्यम्। तस्मात्तत्प्राधान्यम् राज्ञाम्, अतस्तदध्यक्षोऽपि अध्यक्षान्तरेभ्यो विशिष्टगुणः स्यात्॥

प्रतिपदपञ्चिका

शासनाधिकारः इति सूत्रम्। तत्र शासनमारोपिताधिकारो विधिरिति, सूत्रार्थः। कथं पुनरधिकारशब्दो विधिमभिधत्ते। ज्ञापकात्। वक्ष्यति हि 'कौटिल्येन नरेन्द्रार्थे शासनस्य विधिः कृत' इति। एवं शासनविधिरिति, वक्तव्ये अधिकारग्रहणं सर्वाधिकाराणामपि शासनप्रधान्यज्ञापनार्थम्। सम्बन्धस्तु द्विविधः, राजशासनं वाचिकं, पत्रलिखितं च। तत्र वाचिकं दूतप्रणिधावुक्तम्। "शासनमेवं वाच्य" इत्यादिना, लिखितं त्वभिधीयत इति, अथवा अर्धगुणहीनश्शासनहर इत्युक्तम्। तच्छासनमभिधीयत इति, अयं वा सम्बन्धः। कस्मात्पुनश्शासनविधिं प्रति, महान्यत्न इति। तदाह शासने शासनमित्याचक्षत इति।

अत्र वक्ष्यमाणो हि शब्दस्सम्बध्यते। यस्माच्छासन एव, तालतालीभूर्जादिपत्राणामन्यतमस्मिन् यदभिलिखितं तदेव शासनं भवति। अव्यभिचाराद्वाचिकं तु शासनमेव न भवति। इङ्गिताकारमदप्रमादसुप्तप्रलापादिभिर्मन्त्रभेदसम्भवादित्येवमाचक्षते ब्रुवते। शुक्रबृहस्पतिप्रभृतय आचार्या इति वाक्यशेषः। किञ्च शासनप्रधानका राजानः तदायतन्त्रावापगतसमस्तव्यापारा हि यस्मात्कस्मादित्याह तन्मूलत्वादिति। तन्मूलत्वाच्छासननिमित्तत्वात्। सन्धिविग्रहयोरिति। सन्धिविग्रहग्रहणं षाड्गुण्योपलक्षणार्थम्।

श्रीमूला

शासनस्य प्रधानत्वाद् विशिष्टगुण एव तल्लेखको भवितुर्महतीत्याह—तस्मादित्यादि। तस्माद्, अमात्यसम्पदोपेतः 'जानपदोऽभिजात' इति मन्त्रिपुरोहितोत्पत्तिप्रकरणोक्ताः पञ्चविंशतिर्जानपदत्वादयो गुणा अमात्यसम्पत् तया युक्तः, सर्वसमयवित् सर्वेषां वर्णानाम् आश्रमाणां वर्णातिरिक्तानाम् चाचाराभिज्ञः,

१. निश्चितार्थं लेखं—पा०।

## श्रीमूला

आशुग्रन्थः शीघ्रवाक्यसन्दर्भप्रसरः, चार्वक्षरः चारूणि एकैकशः समुदायतश्च दर्शनीयान्यक्षराणि लिपयो यस्य सः, लेखवाचनसमर्थः लेखस्य स्फुटसुस्वरयथास्थानवाक्यविश्रमसुभगपठनप्रवीणः, लेखस्याप्रकाश्यार्थस्य संज्ञालेखस्य वर्जिताक्षरस्य पदवाक्यसङ्केतितलेखाविशेषात्मकस्य वाचने व्यवहारे समर्थऽ इत्यपरे। एवमेकोनत्रिंशता गुणैर्युक्तो लेखकः स्यात्। स च लेखको राज्ञोच्यमानं वाचिकमनाकुलेन मनसा श्रुत्वाऽर्थान् पौर्वापर्यक्रमेण परलेखार्थानुगुण्यानुगुण्याभ्यां च निश्चित्य लेखं लिखेदित्याह—सोऽव्यग्रेत्यादि। तत्र युक्तानामव्यग्रमनस्कता राजसत्काराद् भवति।

## चाणक्यटीका

अतश्च अमात्यसम्पदोपेत इति पुनर्वचनं साकल्यपरिग्रहार्थम्। गुणान्तरविधानात्तु इदं नार्थ्यायेतेत्याशङ्कानिवृत्त्यर्थम्। एवङ्गुण (व) त्वेऽपि ये वाप्यस्यान्यगुणाः स्युरिति तानाह—सर्वसमयवित् सर्वेषां राज्ञाम्, तथा देशकुलजातिसङ्घाश्रयाणाम् अन्ततः पाषण्डानां विदिताचारोपचारः, तदनुरूपं लेखं प्रतिविदध्यात् शब्दान् आशु गृह्णाति, ग्रथितान् वाचयतीति च आशुग्रथनः। चार्वक्षरः शोभनानि दर्शनसुखवाचकानि अक्षराणि यस्य। अर्थावबोधात् सर्वलिपिज्ञत्वाच्च शीघ्रं लेखवाचनसमर्थः। सोऽव्यग्रमना इति। कान् कियतः कीदृशान् वा अर्थान् समाज्ञापयतीत्यवहितमनाः। राज्ञः सन्देशं श्रुत्वा तांश्च दर्शनार्थं (प्र ?) पत्रे निदध्यात्, अयं प्रथमः अयं द्वितीयः अयं तृतीयः इत्यानुपूर्व्या तानालोच्य लेखं भूर्जादिपत्रेषु विदध्यात् विरचयेत्। एवञ्च निश्चितार्थो भवति।

## प्रतिपदपञ्चिका

यतश्चैवंभूतं शासनमतस्तस्य लेखे नास्यापि प्रधानेन भवितव्यमित्याह—तस्मादमात्यसम्पदोपेता इत्यादि, अमात्यसम्पद् जानपदादयः पञ्चविंशतिर्गुणाः। तया समस्तया समन्वितः। तथा सर्वसमयपरिज्ञानादिभिश्चतुर्भिरित्येवं सङ्क्षेपणैकोनत्रिंशद्गुणो लेखको भवति। तत्र सर्वसमयपरिज्ञानादिभिः चतुर्भिरेवंवित्सर्ववर्णाश्रमाचाराभिज्ञः सर्वलिपिज्ञ इति केचित्। सर्वभाषाभिज्ञ इत्यपरे। आशुग्रन्थः सकृदुक्तग्राही। शीघ्रकविरिति केचित्। लघुहस्तत्वाद्द्रुतलेखीत्यपरे। चार्वक्षर इति। असंसक्तलिखितत्वात् सुबोधानि समुदायशोभीनि चाक्षराणि यस्य लेखवाचनसमर्थ इति। विस्पष्टमधुरकरणसुविभक्तार्थपदवर्णाभिधायी न्यूनातिरिक्ताक्षरप्रतिविधानाभिज्ञ इतिकेचित्। प्रकाश्याप्रकाश्यलेखाभिज्ञो जिताक्षरश्चेत्यपरे। स एवंभूतो लेखकः स्यात्। सोऽव्यग्रमना अनाकुलचित्तो यथोद्दिष्टस्य सम्यगवधारणार्थं तच्चानाकुलचित्तत्वं उत्तरोत्तरसत्कारोपगृहीतः[1]। सम्यक्सर्वकार्याण्यनुतिष्ठन्ति। उक्तं हि—यदाहुः—

---

१. सत्कारनिमित्तकम् सर्वेऽपि ह्यध्यक्षाः उत्तरोत्तरसंस्कारोपगृहीताः। पा०

**समीक्ष्य कार्यं लेखं विदध्यात्। देशैश्वर्यवंशनामधेयोपचारमीश्वरस्य, देशनामधेयोपचारमनीश्वरस्य।**

---

### श्रीमूला

"नीचापि बुद्धिर्नृपमानयोगाच्छ्रेष्ठत्वमायाति तदाश्रितानाम्।
अग्र्यापि निर्वाति हि मानहीना स्नेहं विना दीपशिखेव तूर्णम्॥"

इति। परलेखानुरूप्यानानुरूप्यनिश्चयविषयेऽपि श्लोकमुदाहरन्ति—

"श्रुत्वा नरेन्द्रवाक्यं परभावं चावधार्य परलेखात्।
लेखः खलु कर्तव्यो गुणदोषविनिश्चयज्ञेन॥"

इति। कीदृशं विदध्यात्, ईश्वरस्य राज्ञः, देशैश्वर्यवंशनामधेयोपचारं देशादीनां चतुर्णामुपचारो यस्मिंस्तं तथाभूतम्। तत्र देशोपचारोऽध्युष्यमाणदेशनिर्देशेनोपचारः, यथा—मध्यदेशमलंकुर्वाणमिति। ऐश्वर्योपचारः भूकोशदण्डसम्पन्निर्देशोपचारः 'मध्यदेशाधिपतिमसङ्ख्याताप्रतिहतदण्डक्षपितरिपुपक्षम्' इत्येवञ्जातीयः। वंशोपचारः 'सोमान्वयभूषणम्' इत्येवम्प्रकारः। नामधेयोपचारः 'महाराजाधिराजश्रीसिंहवर्मदेवम्' इत्येवञ्जातीयः। अनीश्वरस्य अमात्यादेः, देशनामधेयोपचारं देशोपचारनामोपचारयुक्तम्। तत्र देशोपचारः 'कान्यकुब्जमलंकुर्वाणम्' इत्यादिः। नामोपचारः 'श्रीसोमदत्तमित्यादिः।'

### चाणक्यटीका

देशोपचारं सर्वसम्पदुपेते रमणीयतरेऽमुके स्थाने इति। ऐश्वर्योपचारं परम्परानुगतप्रजापालनाधिकारदीक्षित इति। वंशोपचारं अमुककुले (केऽर्थ ?) पितृपादानुध्यात इति। देवताऽपि आश्रयसामान्या वंशेऽन्तर्भावनीया परमभागवत इति। (सु ?) नामधेयोपचारं श्रीमहावासुदेव इति। राज्ञ इति। ईश्वरस्य लेखं विदध्यादित्येव अनीश्वरस्य ऐश्वर्यासम्भवात्॥

### प्रतिपदपञ्चिका

नीचोऽपि बुद्धिर्नृपमानयोगाच्छ्रेष्ठत्वमायाति तदाश्रितानाम्।
अग्र्याऽपि निर्वाति हि मानहीना स्नेहं विना दीपशिखेव तूर्णम्॥

इति। राज्ञः सन्देशं श्रुत्वा निश्चित्यार्थं पौर्वापर्यक्रमेणावधार्यार्हेति, यद्वा विस्तराभिहितस्य सङ्क्षेपार्थं निश्चित्य ज्ञात्वा ततो लेखं विदध्यादिति। आह च—

श्रुत्वा नरेन्द्रवाक्यं परभावं चावधार्य परलेखात्।
लेखः खलु कर्तव्यो गुणदोषविनिश्चयज्ञेन॥

देशैश्वर्येत्यादि, लेखं विदध्यादिति, वर्तते देशाद्युपचारैश्चतुर्भिरीश्वरस्य राज्ञो लेखं विदध्यात्। तत्र देशोपचारो यत्र स्थितः। तद्यथा—मध्यदेशमलङ्कुर्वाणमित्यादि। ऐश्वर्यं भूमिकोशदण्डसम्पत्। तद्यथा—मध्यदेशाधिपः परिमाणक्रोशराशिम-

**जातिं कुलं स्थानवयश्श्रुतानि**
**कर्मर्द्धिशीलान्यथ देशकालौ ।**
**यौनानुबन्धं च समीक्ष्य कार्ये**
**लेखं विदध्यात् पुरुषानुरूपम् ॥६७॥**

---

प्रतिपदपञ्चिका

सङ्ख्यातप्रतिहतदण्डक्षपिताशेषरिपुवर्गमित्यादि । वंशोपचारो यथा सोमान्वयमलङ्कुर्वाणमित्यादि । नामधेयोपचारो यथा—महाराजाधिराजं श्रीशूरवर्मदेवमित्यादि । देशनामधेयोपचारर्द्विविधमनीश्वरस्यामात्यादेस्तद्यथा—कान्यकुजमलङ्कुर्वाणं श्रीसोमदत्तमित्यादि ।

श्रीमूला

जातिकुलाद्येकादशकमपि लेखविधौ समीक्षणीयमित्याह—जातिमित्यादि । तत्र जातिर्ब्राह्मणादिः । तत्समीक्षा च ब्राह्मणो ब्राह्मणस्य ज्यायसोऽभिवादपूर्वं कनीयस आशीर्वचनपूर्वं क्षत्रियस्य स्वस्त्यादिपदपूर्वं क्षत्रियादिर्ब्राह्मणस्य प्रमाणपूर्वमित्येवञ्जातीया । कुलम् अन्ववायो भोजादिः । स्थानमधिकारः सन्धिविग्रहिकादिः । वयो यौवनादि । श्रुतं शास्त्रविज्ञानम् । कर्म वृत्तिः । ऋद्धिर्धनसम्पत् । शीलं सदाचारः । देशो वासस्थानम् । कालः तदात्वमायतिश्च । यौनानुबन्धो, विवाहसम्बन्धः । इदं जात्याद्येकादशकम्, समीक्ष्य पर्यालोच्य, कार्ये कार्यविषये, पुरुषानुरूपं पुरुषाणां हीनमध्यमोत्तमानां यथाक्रममाज्ञापनबोधनविज्ञापनाद्युक्तिप्रकारैरनुरूपं लेखं विदध्यात् । श्लोकं चात्रोदाहरन्ति—

"वित्तं बन्धुर्वयः कर्म विद्या भवति पञ्चमी ।
एतानि मान्यस्थानानि गरीयो यद्यदुत्तरम् ॥" इति ।

चाणक्यटीका

जातिमिति । उत्तमजातिम्, ईश्वरो विज्ञापयेत्, समजातिं बोधयेत्, हीनजातिमाज्ञापयेत् । एष न्यायः, समहीनगुरुकुलेषु गुरुमित्रभृत्यस्थानीयेषु, स्थावरयुवबालेषु, बहुश्रुताल्पश्रुताज्ञेषु, यजनदेवनकृष्यादिषु कर्मसु, समृद्धमध्यदरिद्रेषु, तपोलोकयात्रापरोपतापादिशीलेषु इत्येवं ज्ञात्वा विधेयम् । तथा देशापेक्षयाऽपि, दाक्षिणात्याः पुत्राः श्रद्धालवः, वस्तुनो बोधमात्रार्थिनः मध्यदेशीयाः, म्लेच्छास्त्वज्ञा अविधेया इति । काल इत्यवस्थाप्राप्तिः । कस्मिंश्चित् काले प्रागमात्याः सन्तोऽपि अवमानाज्जुगुप्सामेव(नमेव) समीयन्ते (?) (मन्यन्ते) मान्याश्च माननां न बहु मन्यन्ते तेषु यथाभिप्रायं विदध्यात् । यौनानुबन्धमिति । योन्यादिसम्बन्धं पक्षसमहीनाधिकवयस्स्वपि श्वशुरमैथुनकतत्पुत्रादिषु यथायोगम् । कार्य इति त्रयोदशे वक्ष्यमाणे । लेखं विदध्यात् । जात्यादिविशिष्टम् । पुरुषानुरूप—मिति एषां जात्यादीनां परस्परसमवाये यथागौरवं लोकप्रसिद्धा व्यवस्था ।

[ लेखनसौन्दर्यहेतुभूताः अंशाः तेषां विवरणं च ]

**अर्थक्रमः सम्बन्धः परिपूर्णता माधुर्यम् औदार्यं स्पष्टत्वम् इति लेखसम्पत् । तत्र यथावदनुपूर्वक्रिया प्रधानस्यार्थस्य पूर्वमभिनिवेशः इत्यर्थस्य क्रमः ।**

---

चाणक्यटीका

यथाहुः—

वित्तं बन्धुर्वयः कर्म विद्या भवति पञ्चमी ।
एतानि मान्यस्थानानि गरीयो यद्यदुत्तरम् ॥

( मनु० ११. १६०. )

इति । अभिवादयते प्रीणयति पूजयतीत्यादयो विज्ञापनामाष्टयः (?) । परिष्वजते कुशलयति मानयतीति सम्बोधनभेदाः । अभिमानयति अभिवर्धयति इत्यादयः समाज्ञापनावाचोयुक्तयः सम्बोध्यचित्तानुरोधप्रयोजनाः ॥

प्रतिपदपञ्चिका

भूयोऽपि जात्यादि[1], तत्र जातिः ब्राह्मणादिः । तद्यथा—ब्राह्मणो ब्राह्मणस्य । वयः श्रुताद्यपेक्षयाभिवादनपूर्वकमाशीःपूर्वकं वा । तद्यथा क्षत्रियादेः स्वस्त्यादिपूर्वकं क्षत्रियादि, ब्राह्मणस्य प्रणतिपूर्वकमित्येवं सर्वत्र योज्यम् । कुलमभिधानमभोज्यादि-स्थानाधिकारः सन्धिविग्रहप्रतिहारादिः । वयो यौवनादि । श्रुतं शास्त्रसंस्कारः । कर्म निन्दितमनिन्दितं चानुष्ठानं जोविकेत्यपरे । ऋद्धिस्समृद्धिः । शीलमाचारः । देशो निवासः । कालस्तदात्वमायतिर्वा । केचित्तु देशकालमिति एकमेव पठन्तः कार्यनिबन्धनं परमात्मनोरवस्थाभेदमाचक्षते । यौनानुबन्धो वैवाह्यसम्बन्धः । एतानि जात्यादीनि समीक्ष्य सम्यङ्निरूप्य कार्यं लेखनीयकार्यनिमित्तं पुरुषानुरूपं पुरुषाणां होनमध्यमोत्तमापेक्षयाऽऽज्ञापनसम्बोधनपूजादिभिरनुरूपं लेखं विदध्यात् । तथा च—

वित्तं बन्धुर्वयः कर्म विद्या भवति पञ्चमी ।
एतानि मान्यास्थानानि गरीयो यद्यदुत्तरम् ॥

श्रीमूला

लेखसम्पदमाह—अर्थक्रम इत्यादि ।

अर्थक्रमादीन् षट्लेखगुणान् स्वयमेव व्याचष्टे—तत्रेत्यादि । तत्र अर्थक्रमादीनां मध्ये । यथावदनुपूर्वक्रिया यथार्हं क्रमकरणम् । तदेव स्फुटप्रतिपत्तये विवृणोति—

चाणक्यटीका

लेखसम्पदिति ये लेखगुणाः । यथावदिति यथाविहितानां देशानाम् अनुपूर्व-क्रिया देशोपचारप्रयुक्तेन ऐश्वर्योपचारो नामधेयोपचार इति जात्यादीनां च पूजाहेतूनां प्रागुपादानमित्याद्या अनुपूर्वक्रिया प्रधानस्यार्थस्य पूर्वं निवेशनं पश्चादप्रधानस्येति ॥

---

१. भूयोऽपि धात्वादिना एकादशलेखविधौ समीक्षणीयानर्थानिग्ह जातिकुलमित्यादि । पा०

**प्रस्तुतस्यार्थस्यानुपरोधात् उत्तरस्य विधानमासमाप्तेरिति सम्बन्धः। अर्थपदाक्षराणामन्यूनानतिरिक्तता हेतूदाहरणदृष्टान्तैरर्थोपवर्णनाऽश्रान्तपदतेति परिपूर्णता। सुखोपनीतचार्वर्थशब्दाभिधानं माधुर्यम्। अग्राम्यशब्दाभिधानमौदार्यम्। प्रतीतशब्दप्रयोगः स्पष्टत्वमिति।**

---

प्रतिपदपञ्चिका

साम्प्रतमर्थक्रमादिकां षड्विधां लेखसम्पदं अभिधाय स्वयमेव व्याचष्टे तत्रेत्यादि। तत्रेति निर्धारणे। यथावदनुपूर्वक्रियेति, यथाभिहितजात्यादीनभ्यर्हितत्वात् पूर्वमभिलिख्य पश्चादितरेषां लेखनम्। प्रधानस्यार्थस्य पूर्वमभिनिवेश इति। हस्तिनं प्रेषयाऽश्वं चेति प्राधान्यात्। पूर्वं हस्तिनो निवेश इति। अयं च क्रमो

श्रीमूला

प्रधानस्यार्थस्य पूर्वमभिनिवेश इति। अभ्यर्हितस्यार्थस्य पूर्वं लेखनं पश्चादन्यस्येत्ययमर्थक्रमो नाम लेखगुणः।

सम्बन्धमाह—प्रतुतस्येति। प्रस्तुतस्य प्रक्रान्तस्य, अर्थस्य, अनुपरोधाद् अबाधात्, उत्तरस्यार्थस्य, आ समाप्तेर्विधानम् आ लेखपरिसमापनाल्लेखनं पूर्वपूर्वलिखितार्थाविरोधेनोत्तरोत्तरार्थलेखनमिति यावत्, इत्ययं सम्बन्धाख्यो गुणः।

परिपूर्णतामाह—अर्थेत्यादि। अर्थपदाक्षराणामन्यूनानतिरिक्तता अर्थस्य पदानामक्षराणां चान्यूनतानतिरिक्तता च। अर्थन्यूनता यथा—'हस्तिनौ प्रयच्छे' त्युक्ते हस्तिनं प्रयच्छेति लेखनम्। इहार्थमात्रं न्यूनं पदाक्षराणि तु न न्यूनानि न चातिरिक्तानि। 'हस्तिनं प्रयच्छे' त्युक्ते 'हस्तिनौ प्रयच्छे'ति लेखनेऽर्थातिरिक्तता पदाक्षराणि तु तावन्त्येव। पदन्यूनता यथा—'कालिङ्गं हस्तिनं प्रयच्छे' त्युक्ते विशेषणपरित्यागेन 'हस्तिनं प्रयच्छे'ति लेखनं, 'हस्तिनं प्रयच्छे'ति निर्विशेषणोक्तौ सविशेषणलेखनं पदाधिकता। अक्षरन्यूनता यथा—'सलिल'—शब्दोक्तौ वारिशब्दलेखनं, तद्वैपरीत्यलेखनेऽक्षराधिकता। हेतूदाहरणदृष्टान्तैरर्थोपवर्णना हेतुः कारणम्, उदाहरणं शास्त्रसंवादाभिधानं, दृष्टान्तो लोकसिद्धार्थनिदर्शनं हेत्वादिभिस्त्रिभिरर्थस्य प्रस्तुतस्य उपवर्णना सम्प्रतिपत्तिसम्पादनम्। अश्रान्तपदता वाक्यार्थे पदवचनम् यथा 'सन्धि कुरु' इति पदसूमूहप्रतिपाद्यस्यार्थस्य 'सन्धत्स्व' इत्येकेन पदेन प्रतिपादनम्। इति परिपूर्णता अनेन प्रकारेण परिपूर्णता नाम गुणः।

सुगमसुन्दरार्थप्रतिपादकशब्दप्रयोगो नाम माधुर्यम्, अग्राम्यशब्दप्रयोग औदार्यम्, सुप्रसिद्धशब्दप्रयोगश्च स्पष्टत्वमित्याह—सुखोपनीतेत्यादि।

चाणक्यटीका

प्रकृतस्येति। प्रस्तुतस्य प्राग् लिखितस्य अनुरोधेन पश्चाल्लिख्यमानस्य विधानम्। आलेखपरिसमाप्तेः यावत्तावत् पुत्रमत्रमरणमुपलभ्य शोकेनागन्तुना

चाणक्यटीका

परितपन्तो वयं सेतुकर्मानुष्ठानमपि तावद् घोषयात्रादिव्यग्रतया न सम्भावयाम इति पूर्वापरविरुद्धम् ॥

अर्थपदाक्षराणामिति । अर्थस्य न्यूनता यथा अस्मिन्नगरे यो वसति नायकः विष्णुदासः स प्रेषणीय इति न्यूनार्थता, न ज्ञायते किमर्थमिति नर्त्तितुमि ̈ ̈ ̈नार्था एतावता च गते यात्रानोद्यमतिरहितेति अतिरिक्तार्थता । अत्रैव य इत्यनेन विना न्यूनपदता । योऽसाविति अतिरिक्तपदता । न्यूनाक्षरता यथा उपालम्भलेखे कथं भवतामश्वधर्मत्वं युक्तम् इति विवक्षिते भवतामप्यश्वसधर्मत्वमिति निन्दां गमयति । विपर्यये अतिरिक्ताक्षरता विपर्ययं गमयतीति । प्रायेण आत्मवन्तोऽनुप्र (म ? ण) त्यैवात्मानं रक्षतीति हेतुः । वेतसवदित्युदाहरणम् । दृष्टवानसि वैतद् यदमुना प्रणिप्रत्येवास्मान् अतिसन्धाय वृद्धिः प्राप्तेति दृष्टान्तः । उदाहरणदृष्टान्तयोरेकत्वेऽपि सर्वप्रसिद्धं साध्यसाधनं यत्र स दृष्टान्तः, सफलस्य हेतोः प्रदर्शनमुदाहरणम् । तैः अर्थस्य उपमेयादेः साध्यस्य उपवर्णनम् अश्रान्तपदता अक्लिष्टपदता । यत्रैकेन पदेन प्रतिपाद्योऽर्थः अशक्त्या द्वाभ्यां प्रतिपाद्यते तत् क्लिष्टपदम् । यथा तस्मान्न विश्वसिति ( इत्याह ) अभियोक्ष्यामि इति प्रयोक्तव्ये तस्मान्न विश्वासं याति अभियोगं करिष्यामीति न लेखितव्यम् ॥

सुखोपनीतेति । सुखोपनीतानामपि अनवहितसम्बन्धानाम् अनड्वाहमुदाहारि । या त्वं वहसि शिरसा कुम्भं भगिनि सा नैनमभिधावन्तमद्राक्षीः इत्येवंप्रकाराणामभावादभिधानम्, चार्वर्थाभिधानं मरणे स्वर्याणां यक्ष्मणि अपादपमिति ( ? ) चारुशब्दाभिधानं जलमुचां खण्डैरम्भसां कणैरित्यादि । न तु कार्यं जलमुचः खण्डैरम्भसः कणैरिति । अग्राम्यशब्दाभिधानम् अस्माद् बलवतो दुर्बलस्त्वं कस्मान्न प्रणमसि इत्यादीनां ग्राम्याणां प्रयोगात् । प्रतीतशब्दप्रयोगः स्थानाभिकाङ्क्षायां ( ? ) वाराणसी शब्दस्य सर्वलोकप्रसिद्धस्य प्रयोगात् ॥

प्रतिपदपञ्चिका

नामलेखगुणः । सम्बन्धमाह—प्रकृतस्येत्यादि, प्रकृतस्य प्रक्रान्तार्थस्य साध्यस्यानुपरोधात् । अविघातादुत्तरस्य अनुविधानं पश्चाल्लेखनं आसमप्तेरिति, बहुष्वपि प्रयोजनेषु लेखनीयेषु यथा परस्परं व्याघातकं[1] न भवति । तथा लिखेदिति, अयं सम्बन्धः ।

परिपूर्णतामाह—अर्थपदाक्षराणामित्यादि ।

तत्रार्थादीनां त्रयाणामन्यूनानतिरिक्तता प्रत्येकमहीनाधिगतार्थस्य हस्तिनौ प्रयच्छेदिति वक्तव्ये हस्तिनमिति यथा लिखति तदा तदेव पदं तावन्त्येवाक्षराणि अर्थस्य तु हीनता भवति । अस्यैव वैपरीत्यत्यागादर्थाधिको भवति । पदन्यूनतां कालिङ्गं-हस्तिनं प्रयच्छेति विशेषेण वक्तव्ये यदा विशेषणरहितं करोति तदा पदन्यूनता भवति ।

———

१. परस्परलेखमीयं पूर्वस्य पूवस्य ।—पा०

[ वर्णपदवाक्यानां स्वरूपविभागादिः ]

**अकारादयो वर्णाः त्रिषष्टिः । वर्णसङ्घातः पदम् । तच्चतुर्विधं नामा-**

---

प्रतिपदपञ्चिका

वैपरीत्यात् पदाधिकता भवति । तदाक्षरन्यूनता, यथा वारिशब्दे प्रयोक्तव्ये गोशब्दं प्रयुङ्क्ते तदा वर्णन्यूनता भवति । स एवार्थः । तदाऽधिकतापि । वारिशब्दे एव प्रयोक्तव्ये सलिलप्रयोगे सतीति केचित् ।

अपरे तु चित्तविक्षेपादिदोषात्[1] दशसु लिखितव्येषु यथा नवैकादश वा लिखति । तदऽर्थस्य न्यूनातिरिक्ता भवति । एवं पदानामपि । किंचित्पदमेव न लिखितीति । एवमक्षराणामपि योजनीयमिति । तथा हेतुदाहरणदृष्टान्तैरिति । हेतुः कारणं, उदाहरणं शास्त्रोक्ताऽर्थनिदर्शनम् । दृष्टान्तः लोकप्रसिद्धार्थस्य प्रदर्शनम् । एभिरर्थोपवर्णना(म)मश्रान्तपदता वाक्यवाक्यार्थे पदवचनं सन्धिविग्रहं वा कुर्विति वाक्ये प्रयोक्तव्ये सन्धत्स्व विगृहाण वेति पदप्रयोगादश्रान्तपदता भवति । एवमेषा परिपूर्णता नाम लेखगुणः ।

माधुर्यमाह—सुखोपनीतानां शोभनार्थानां यदभिधानं तन्माधुर्यं नाम लेखगुणः । औदार्यमाह—अग्राम्येत्यादि । ग्राम्या अपभ्रंशप्राकृतादिशब्दाः तैरनभिधानं साधुशब्द प्रयोगः, तदौदार्यं नाम लेखगुणः । स्पष्टत्वमाह—प्रतीतशब्दप्रयोग इति । स्पष्ट इत्यादि, सुखबोधम् इतिब्शदस्समासौ ।

श्रीमूला

शब्दप्रसङ्गात् तद्गतं पदवाक्यविभागं पदवाक्यगतं च लेखे करणीयं विशेषान्तरं निरूपयिष्यन् पदारम्भकत्वात् प्रथममक्षराणि निरूपयति—अकारादयो वर्णास्त्रिषष्टिरिति । तत्र ह्रस्वदीर्घप्लुतभेदादचो द्वाविंशतिः, कादयो मावसानाः स्पर्शाख्याः पञ्चविंशतिः, यरलवा अन्तःस्थाख्याश्चत्वारः, अयोगवाहा अनुस्वार विसर्गजिह्वामूलीयोपध्मानीयाश्चत्वारः, यमाक्षराणि चत्वारि, शषसहा ऊष्माख्याश्चत्वारः इत्येवं वर्णानां त्रिषष्टित्वम् । यदाहुः—

"दीर्घाः स्वराणां तत्राष्टौ पञ्च ह्रस्वाः प्लुता नव ।
चतुर्धाऽयोगवाहोष्मयमान्तस्थाः पृथक् पृथक् ।
विंशतिः पञ्च च स्पर्शास्त्रिषष्टिरिति कीर्तिताः ।।" इति ।

स्वरानुनासिक्यकृतस्तु भेदो न सङ्ख्यातो लौकिकप्रयोगे तदनादरात् ।

पदस्वरूपमाह—वर्णसङ्घातः पदमिति । नियतानुपूर्वीकाणां वर्णानां समूहोऽर्थ-विशेषसंकेतितः पदमित्युच्यते । तच्चतुर्विधं नामादिभेदादित्याह—तदिति । नामादि-

---

१. व्यपेक्षादि ।—पा०

ख्यातोपसर्गनिपाताश्चेति। तत्र नाम सत्त्वाभिधायि। अविशिष्टलिङ्ग-

चाणक्यटीका

त्रिषष्टिः—यदुक्तम् अर्थपदाक्षराणामन्यूनानतिरिक्तता इति, तत्र अक्षराणि वर्णाः। तेषाम् अकारादयश्चत्वारो ह्रस्वदीर्घप्लुतभेदात् द्वादश, ह्रस्वः प्लुतो-लृकारः, सन्ध्यक्षराण्यष्टौ दीर्घप्लुतभेदादिति द्वाविंशतिः स्वराः। पञ्च पञ्चका वर्गाः, चत्वारोऽन्तस्थाः, शषसहाः सोष्माणइति त्रयस्त्रिंशद्वर्णाः अनुस्वारविसर्जनीय-जिह्वामूलीयोपध्मानीयाश्चत्वारः, यमाश्चत्वारः, अष्टावयोगवाहाः एते त्रिषष्टिः मूर्धन्येन लकारेण सहान्येषां चतुष्षष्टिः। असौ तु लेखे नोपयुज्यत इत्येतावन्त एव संहृताश्चारवो लेखितव्याः॥

एषामेव अन्यूनानतिरिक्ततायां पदस्य ( अ ? ) यथार्थत्वम्, यतो वर्णसङ्घातः पदम्। तत्र प्रायोपधर्माख्यानम्, एकवर्णमपि ह्यव्ययं पदमस्ति, च, वा, ह इत्यादि।

प्रतिपदपञ्चिका

साम्प्रतं वर्णात्मकत्वात् पदानां, पदात्मकत्वाच्च वाक्यानां, वाक्यनिबन्ध-नत्वाच्च वाक्यार्थप्रतीते र्वाक्यार्थरूपत्वाच्च लेखार्थस्य तत्स्वरूपावधारणायाह-अकारादयो वर्णास्त्रिषष्टिरिति, अत्र ह्रस्वादिभेदेन द्वाविंशतिः स्वराः। पञ्चविंशति-स्पर्शाः, चत्वारश्चत्वारोऽन्तस्थायोगवाहयमोष्माण इत्येवमेतत्त्रिषष्टिर्वर्णाः[1] भवन्ति। स्वराऽनुनासिकभेदानां त्वग्रहणं भाषायां तत्प्रयोगनियमाभावात्।

स्वाभिधेयावधिपरिच्छिन्ना वर्णा एव पदव्यपदेशभाजो भवन्ति। तच्च पदं

श्रीमूला

स्वरूपमाह—तत्रेति। तेषु नामादिषु मध्ये, सत्त्वाभिधायि जातिगुणद्रव्यवाचकं, नाम इत्युच्यते। अविशिष्टलिङ्गं स्त्रीपुन्नपुसंकरूपलिंगविशेषशून्यं क्रियावाचकम् आख्यातम्। क्रियाविशेषकाः क्रियागतप्रकर्षादिविशेषद्योतकाः, प्रादयः प्र परा अप

चाणक्यटीका

चतुर्विधम्। सत्त्वाभिधायीति जातिगुणक्रियाद्रव्यशब्दत्वेऽपि वस्त्वभिधायी इदं तत्सदिति निष्पन्नरूपावधिरित्यर्थः, वृक्षः प्लक्षः शुक्लो नीलः कर्त्ता हर्त्ता चैत्रो गुप्त इति। अविशिष्टलिङ्गमिति अविशिष्टस्त्र्यादिलिङ्गं क्रियासाधनाभिधानेऽपि प्रभूत-

प्रतिपदपञ्चिका

चतुर्विधं। नामाख्यातोपसर्गनिपातभेदेन। तेषां च स्वरूपमाह—तत्रेत्यादि। तत्र तेषु। नाम सत्वाभिधायीति। सत्वं जातिगुणद्रव्याणि। तदभिधायि तद्वाचकं नाम प्राति-

१. यरलवेत्यन्तस्थाः अनुस्वारविसर्गजिह्वामूलीयोपध्मानीयायोगवाहाः। यमाक्षराणि चत्वारि ( ल, क्ष, त्र, क्ष, ) ऊष्माणश्च चत्वारः ( श० ष० स० द० )

**माख्यातं क्रियावाचि। क्रियाविशेषिताः[1] प्रादय उपसर्गाः। अव्ययाः चादयो निपाताः। पदसमूहो वाक्य[2]मर्थपरिसमाप्तौ।**

---

श्रीमूला

सम् अनु इत्यादयः उपसर्गाः। अव्ययाः लिङ्गवचनविभक्तिभेदरहिताः, चादयः च वा ह इत्यादयः, निपाताः।

वाक्यस्वरूपमाह—पदेत्यादि। पदसमूहः पदानां सङ्घातो वाक्यम् इत्युच्यते, अर्थपरिसमाप्तौ अर्थस्य पर्यवसाने सति तेन पदसमूहेन चेदेको विशिष्टार्थो नैराकाङ्क्ष्येण

चाणक्यटीका

क्रियाविधाय (कं) यत्तदाख्यातम्, तदप्यनुपात्तकालं यायादित्यादि, वर्त्तमानकालं पचतीत्यादि, भविष्यत्कालं पक्ष्यतीत्यादि चतुर्विधमेव। क्रियाविशेषका इति पचतीत्यादिशब्दोपात्तविक्लेदसामान्यायाः क्रियायाः। प्रादय उपसृजन्ति क्रियायामिति उपसर्गाः। तेऽपिचतुर्विधाः—तत्र व्यक्तविशेषाः आभिमुख्येन यायाद् अप (भि?) यायादिति। अव्यक्तविशेषालम्बने प्रलम्बते इति। अपृथक्भूतविशेषा। अधी (त्ये? तौ) अध्येतीति। अनुमीयमानविशेषाः निष्क्रान्तो यूथान्निर्यूथः, परिहृत्य त्रिगर्तेभ्यः (परित्रिगर्तम्) इति। अव्ययाः त्रिलिङ्गसङ्ख्याविशेषैः ये न सम्बद्धयन्ते तेऽव्ययाः। यथोक्तम्—

सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु।
वचनेषु च सर्वेषु यन्नव्येत्ति तदव्ययम्॥ इति।

एवन्धर्माणः चादय इति। इति प्रदर्शनार्थत्वात् स्वरादयोन्तर्माव्याः ते सति वा असति वा गत्यर्थे निपतन्तो निपाताः। तेषां केचित् सत्वार्थोपग्राहिणः स्वर्देवा इत्यादयः। चादीनामपि केचिदनियतदेशप्रयोगाः, प्लक्षाश्च न्यग्रोधाश्च प्लक्षन्यग्रोधाः इति केचित्। अनियतदेशप्रयोगा मा कार्षीर्मे (?)। केचिदनर्थका एव च वा इत्यादयः, ते लेखके······गं प्रयोज्याः इत्येवमर्थः। अर्थपरिसमाप्ता इति।

अर्थो द्विप्रकारः परप्रत्यायवस्तुबोधः, इति कर्त्तव्यतालक्षणश्च। येनास्य वस्तुः प्रयोक्तुर्वा प्रयोजनस्य समा······त्य तद्भवति। तच्च यथाभूतं प्रयोजनं 'देवदत्त कांस्यपात्र्यां भुङ्क्ष्व इति। उपलक्षणीभूतप्रयोजनञ्च 'दूरं गन्तव्यं दृश्यतां सूर्यः इति। काल प्रज्ञामात्रो ····इति एवासौ परिपूर्णता।

प्रतिपदपञ्चिका

पदिक्रम्। आख्यातमाह—अविशिष्टलिङ्गमाख्यातं क्रियावाचीति। अविशिष्टलिङ्गमाख्याते लिङ्गभेदो नास्ति। तत्प्रतिषेधान्नाम्नः स्त्रीपुंनपुंसकभेदेन त्रैविध्यं दर्शयति। क्रियावाचिधात्वर्थाभिधाय्यु, उपसर्गानाह—क्रियाविशेषिका इति,

---

१. क्रियाविशेषकाः—पा०। २. अर्थपरिसमाप्तेः—प्र० पं०

[ लेखने दीर्घसमासपदप्रयोगनिषेधः उपसंहारक्रमश्च ]

**एकपदावरस्त्रिपदपरः परपदर्थानुरोधेन वर्गः कार्यः। लेखपरिसंहरणार्थः इतिशब्दः वाचिकमस्य इति च।**

---

प्रतिपदपञ्चिका

क्रियाप्रकर्षकादिवाचिका स्तद्योतका वा प्रादयः, प्र परा अप समित्येवमादय इत्युपसर्गसंज्ञाः। अव्यया इत्युभयशेषः। तेनोपसर्गा अव्यया इत्युभयत्र शेषः। तेनोपसर्गा अव्यवा भवन्ति। निपातानाह—अव्ययाश्चादयश्च निपाता इति।

तत्राव्यया अविद्यमानलिङ्गसङ्ख्याविभक्तिका विधागतयश्चादयः (?)। च वा अहह इत्येवमादयो निपाता इति।

पदसमूहो वाक्यमर्थपरिसमाप्तेरिति। एकार्थावधिक एकप्रयोगावधिकश्च पदसमूहो वाक्यं भवतीति।

श्रीमूला

बुद्धौ प्रतिष्ठितो भवतीत्यर्थः। समासकरणविषयमाह—एकेत्यादि। वर्गः समासः, परपदार्थानुरोधेन कार्यः परं यत् पदं समासघटकादेकस्मात् पदाद् अन्यत् समासघटकं पदं तस्य अर्थानुरोधेन अर्थमनुसृत्य कार्यः अर्थस्य समासघटकपदान्तारार्थेन सहैकीभावयोग्यतामभिलक्ष्य कार्य इत्यर्थः। पदयोः पदानां वा सति सामर्थ्ये समासः कार्यो नान्यथेत्यभिप्रायः। स च कथम्भूतः कार्यः, एकपदावरस्त्रिपदपरः समस्यमानपदातिरेकेणैकं पदम् अपरं निकृष्टंयस्मिन् स तथाभूतः अर्थात् द्विपदावरः त्रीणि पदानि पराणि उत्कृष्टानि यस्मिन् स तथा भूतश्च कार्यः, त्र्यधिकपदसमासस्तु न कार्यो माधुर्याद्युक्तगुणहानात्। यदाहुः—

"माधुर्यमभिवाञ्छन्तः प्रसादं च सुमेधसः।
समासवन्ति भूयांसि न पदानि प्रयुञ्जते॥"

अपरा व्याख्या—एकपदावरस्त्रिपदपरः इत्यनयोर्यथोक्त एवार्थः, विशेष्यस्तु पदसमूहः, स च सामर्थ्यात् समासलक्षणः। तावता च दीर्घसमासप्रतिषेधस्योक्तस्य सिद्धिः। परपदार्थानुरोधेन वर्गः कार्यः, इत्यनेन तु अर्थान्तरं संगृह्यते। तद्यथा—'वर्गो विरामोऽवसानं विच्छेद' इति पर्यायाः। वर्गः अर्थविश्रान्तिचिह्नं सुखप्रतिपत्त्यर्थं क्रियमाणं, परपदार्थानुरोधेन परपदार्थानुसारेण, कार्यः। 'अनुपरोधेने'ति पाठे परपदार्थानुपघातेन कार्यः।

यथा—'पुराणं मानवो धर्मः स्वंको वेदश्चिकित्सितम्।
आज्ञासिद्धानि चत्वारि, न हन्तव्यानि हेतुभिः।

इत्यस्मिन् श्लोके चत्वारीत्यत्र विरामचिह्नस्य करणे परपदार्थेन नोपरोधः, 'चत्वारि न' इत्यत्र करणे तु स्फुट एव सः इति। लेखपरिसमाप्तिचिह्नमाह—लेखेत्यादि। अन्ते इतिशब्दलेखनं 'वचिकमस्ये'ति लेखनं वा लेखसमाप्तिसूचन-

श्रीमूला

प्रयोजनकमित्यर्थः। तत्र लेखनीयार्थस्य निरवशेषतायामिति शब्दः सावशेषतायां 'वाचिकमस्य इत्युक्तिः वाचिकमस्येति लेखनं च 'वाचिकमस्य लेखहरमुखाच्छ्रोतव्यम्' इत्यादिरीत्या लेखनमिति बोद्धव्यम्।

चाणक्यटीका

परपदार्थानुरोधेनेति। प्रधानपदार्थानुरोधेन, यथा—प्रियसुहृद् इति वाच्ये सुहृत्प्रिय इत्युच्यमानं न केवलं न विशेष ·····दार्थतामेव गमयतीत्युत्तरपदार्थानुरोधेन कार्यः यतो वर्गः समास इत्यर्थः। स च कश्चित् पूर्वपदार्थप्रधानः पूर्वकाय इति। कश्चिदुत्तरपदार्थप्रधानो राजपुरुष इत्यादिः। कश्चिदन्यपदार्थप्रधानो बहुपुत्र इति। कश्चिदुभयपदाथप्रधानो धर्मार्थाविति। सर्वत्र यत् प्रधानं न तद्विरोधनीयम्। तथैक-पदं कस्य वर्गोऽक्षराणां प्रकृतिप्रत्ययार्थयोः·····पदस्यैव वा यथैकात्मनो देवदत्त इति (?) त्रिपदाधिकः प्रतिषेध (पञ्च ?) परश्चैतदिति नान्यत्रावरणीयमिति। (?) बहुना समासे नातिस्पष्टत्वमिति। परिसंहरणादिद्योतनार्थ इतिशब्दः कार्यः। अयं हि स(न्दे ? द) भविसा (या ? न) द्योतने प्रसिद्धः। वाचिकमस्येति च श्रद्धेय मिति। वाचिकलेख एवैतत् सम्भवति॥

प्रतिपदपञ्जिका

एकपदावर इति। निकृष्ट एकपदः, पर उत्कृष्टस्त्रिपदः। ननु 'सुप्सुपेति' वचनादेकस्य पदस्य समासो नास्ति। तस्मान्निकृष्टः पदद्वयस्य परः पदत्रयस्य वा वर्गः समासः कार्य इत्यर्थः। ततोऽधिकपदसमासे तु पूर्वोक्तमाधुर्यादिगुणहानिः। उक्तं च :—

"माधुर्यमभिवाञ्छन्तः[1] प्रसादं च सुमेधसः।
समासवन्ति भूयांसि न पदानि प्रयुञ्जते॥" इति।

केचित्तु वर्गे विरामोऽवसानम्, यतिर्विच्छेदः इति पर्यायानाभ्युपदपरेषु[2] वर्गो विश्रान्तिचिह्नं कार्यम्। सुखानुवचनार्थम् इति। परपदार्थानुरोधेनेति। यथा परेण पदेन सहार्थविरोधो न भवति तथा विच्छेदः कार्यः तद्यथा—

"पुराणं मानवो धर्मः तथा वेदश्चिकित्सितम्।"

आज्ञासिद्धानि[3] चत्वारि, इत्यत्र विरम्य; 'न हन्तव्यानि हेतुभिरि'त्यवधीय-माने परपदार्थाऽविरोधो भवत्येव। यथा पुनराज्ञासिद्धानि चत्वारि नेत्यत्र विरम्य-हन्तव्यानि हेतुभिरिति पठति, तदा विरोधो भवत्येव। अतः परपदार्थानां विरोधे लेखस्य परिसमाप्तिचिह्नं द्विविधमाह—लेखपरिसंहरणार्थं इति शब्दो वाचिकमस्येति वेति लेखपरिसंहरणार्थो लेखपरिसमाप्त्यर्थः। इति शब्दो लेखान्ते प्रयोक्तव्य इति। वा। तत्र तत्र निश्शेषिते लेखनीयार्थं इतिशब्दस्यावशेषे तु वाचकमस्येति समापनीयमिति।

---

१. अभिवाछानी—पा० २. पर्यायादुपपदेषु, पर्यायानदुरुपपदपरेषु—पा०

३. 'आज्ञासिद्धानि चत्वारि न हन्ताव्यानि हेतुभिः'

[ लेखनीयतया सम्भावितानाम् अर्थानां निर्देशः विवरणं च ]

**निन्दा प्रशंसा पृच्छा च तथाऽऽख्यानमथार्थना ।**
**प्रत्याख्यानमुपालम्भः प्रतिषेधोऽथ चोदना ॥६८॥**
**सान्त्वमभ्यवपत्तिश्च भर्त्सनानुनयौ तथा ।**
**एतेष्वर्थाः प्रवर्तन्ते त्रयोदशसु लेखजाः ॥६९॥**

**तत्राभिजनशरीरकर्मणां दोषवचनं निन्दा । गुणवचनमेतेषामेव प्रशंसा । कथमेतत् इति पृच्छा । एवम् इत्याख्यानम् । देहि इत्यर्थना । न प्रयच्छामि**

---

श्रीमूला

अथ लेखनीयतया संभावितान् अर्थान् श्लोकाभ्यामुद्दिशति—निन्देत्यादि । निन्दाप्रशंसादित्रयोदशकविशेषतया त्रयोदशविधा लेखार्था इत्यर्थः ।

निन्दादिकं क्रमेण व्याचष्टे—तत्रेत्यादि । अभिजनशरीरकर्मणां दोषवचनं प्रकृतिकुटिला वैश्वामित्रा इत्यभिजनदोषवचनं कुष्ठितो व्याधित इति शरीरदोषवचनं गोघ्नो ब्रह्महेति कर्मदोषवचनम्, सेयं निन्दा त्रिप्रकारा । तद्वैपरीत्येन तेषामेवाभिजनादीनां गुणवचनं प्रशंसा । कथमेतत् करणीयमिति कर्तव्यजिज्ञासा पृच्छा । एवमेतत् करणीयमित्युपदेशः पृष्टेन क्रियमाण आख्यानम् सन्ध्यादिनिमित्तं किञ्चित् कोशदण्डा-

चाणक्यटीका

कार्यं लेखं विदध्याद् इत्युक्तम् । तत्र कार्यं त्रयोदशविधमित्याह—निन्देति । एतांस्त्रयोदशाश्रित्य प्रज्ञापनादयोऽष्टौ लेखार्थाः लेखोपनिबद्धवाक्यार्थाः क्रियाविशेषाः प्रवर्त्तन्ते ॥

तत्र आश्रया एव तावन्निरूप्यन्ते तत्रेति । अभिजायते अत्रेत्यभिजनो जातिः कुलं देशोवा, वृषला कुले यो हि······क इति । शरीरं कार्यकरणङ्घातः । कुब्जो वामन इति कार्यनिन्दा । पङ्गुर्वधिर इति करणनिन्दा । कर्माणि धर्मार्थकाममोक्षप्रयोजना वर्णाश्रमविषया विवक्षावशान्निन्द्यन्ते तपस्विकः किरातो वेशकुक्कुटो भिक्षुक इति । गुणवचनमेषामेव । वर्णोत्तमो महाकुलीन इति, आर्यावर्त्तज इत्यभिजनस्य । पांशुर्व्यूढोरस्क इति कार्यस्य । प्राज्ञो वाग्मीति करणस्य तपोधनो विशांपतिर्विज्ञात इति ( कर्मणः । वि ) द्यायाः कर्मण्येवान्तर्भावः । कथमेतदिति पृछा विविधा किमर्थं करोमीति प्रयोजनविषया । किमहं करोमीति पृच्छ्यमानविषया । त्रिविषयमेव

प्रतिपदपञ्चिका

साम्प्रतं लेखाभिलेखनीयात्सम्भाविनस्त्रयोदश[1] निन्दादीनर्थानभिधाय स्वयमेव व्याचष्टे तत्रेत्यादि ।

---

१. सम्भावितान्—पा०

**इति प्रत्याख्यानम् । अननुरूपं भवतः इत्युपालम्भः । मा कार्षीः इति प्रतिषेधः । इदं क्रियताम् इति चोदना । योऽहं स भवान्, मम यद् द्रव्यं तद्भवतः इत्युपग्रहः सान्त्वम् व्यसनसाहाय्य[1]मभ्यवपत्तिः सदोषमायति-**

पतिपदपञ्चिका

तत्रेति निर्धारणे सप्तमी, अभिजनं कुलम् । तस्य दोषवचनममलजत्वोल्लिङ्ग-नम्.शरीरं कायः तस्य दोषवचनमिन्द्रियोपघातश्वित्रकुष्ठादिवचनमप्रशस्तलक्षणामिधानं वा । कर्म क्रिया, तस्य दोषवचनम् अधार्मिकत्वयत्किञ्चनकारित्वादिवचनम् । गुणवचनं गुणग्रहणमेतेषामेव अभिजनादीनां प्रशंसा, तद्यथा—विशुद्धसोमान्वयोत्पन्नोऽनुपहत-सर्वेन्द्रियसर्वलक्षणोपेतो ज्वलशरीरो भव्यशक्यकल्याणारम्भीत्यादि । पृच्छामाह—कथमेतदिति, किञ्चित्कथमेतदिति सुहृदं तन्मन्त्रिपरिषदं वा स्वकर्तव्यं लेखेन यत्पृच्छति सा पृच्छा । स च पृष्टो यद् वक्ष्यति, एवमेतदिति । तदाख्यानम् । अर्थनामाह—यदा कंचित्सामन्तं हीनसन्ध्यादौ मित्रं वात्मीयमनेनार्थेन कोशदण्डादिकं किञ्चिद्देहीति

श्रीमूला

दिकं देहीति याचनमर्थना । अर्थितस्य न प्रयच्छामीति वचनं प्रत्याख्यानम् । अननुरूपं भवत इदं कार्यमित्युक्तिरुपालम्भः । मा कार्षीरित्यकार्यप्रवृत्तेर्वारणमाप्त-भावात् क्रियमाणं प्रतिषेधः । इदं क्रियतां सन्धानं विग्रहणं वास्मिन् देश काल इति प्रेरणा चोदना । योऽहं स भवान्, मम यद् द्रव्यं तद् भवत इति स्वशरीरसम्बोध्य-

चाणक्यटीका

आख्यानमेवमिति । देही (ति) प्रार्थना ।···प्रत्याख्यानम् ( नप्रयच्छामीति ) । द्वयमप्येतत् सापदेशं कार्यम् । तद्यथा—पराभियोगं कर्तुकामाय महद्दण्डंप्रयच्छ, एवं कार्ये भवद्विधान्येव मित्राणि युज्यन्त इति । निरन्तराभियोगस्यैता·····न्धः कथमहं प्रयच्छामीति । अननुरूपमिति कृते चिकीर्षिते वानभिप्रेते तत्रोपरि स्नेहस्य किमनुरूप-मेतद् भवतः, यदस्मदमित्रेण सन्धिः कृतः चिकीर्षितो वा इत्युपालम्भः । पुनः मा कार्षीरिति च कृते प्रतिषेधः । इदं क्रियतामिति धर्माद्यविरोधिनी सन्धेर्विपर्यासे विज्ञाते-

प्रतिपदपञ्चिका

प्रार्थयते साऽर्थना । स एवार्थितो यदा न प्रयच्छामीत्याह—तत्प्रत्याख्यानम् । उपालम्भमाह—

अननुरूपमनुचितमेतद्भवत इत्युपालम्भः । प्रतिषेधमाह—अकार्यप्रवृत्तं सुहृदं लेखेन कश्चिन्निवारयति, 'माकार्षीरित्ययं प्रतिषेध इति । चोदनामाह—इदं सन्धि विग्रहं क्रियतामित्येषा चोदना इति । सान्त्वमाह—योऽहं स यावान् यन्मम द्रव्यं तद

१. अभ्युपपत्तिः इति चा० टी० ।

**प्रदर्शनमभिभर्त्सनम् । अनुनयस्त्रिविधः—अर्थकृतावतिक्रमे पुरुषादिव्यसने चेति ॥**

---

श्रीमूला

शरीरयोः स्वद्रव्यसम्बोध्यद्रव्ययोश्चाभेदवचनभङ्ग्यानुकूलनं सान्त्वम् । व्यसनेरिपूपप्लवादौ साह्यकरणमभ्यवपत्तिः । अनित्यं कुर्वणिमचिरात्—त्वां घातयेयं, बद्ध्वा वा कारागृहे निवेशयेयमित्येवमनर्थदोषयुक्तमुत्तरकालकथनमभिभर्त्सनमित्युच्यते । अनुनय इति । अर्थकृतावित्यादयो निमित्तसप्तम्यः । अर्थकरणनिमित्तोऽतिक्रमनिमित्तः पुरुषादिव्यसननिमित्त इति त्रिप्रकारोऽनुनयः । तत्र सामवायिकादिकार्यमवश्यं करणोयं कुर्वाणं प्रति तत्करणार्थं मित्रेण क्रियमाणोऽनुनय आद्यः । स्ववाक्यातिक्रमकुपितं प्रति कोपप्रशमनाय क्रियमाणोऽनुनयो द्वितीयः । पितृभ्रातृपुत्रमित्रामात्यमरणादिव्यसनेष्ववश्यानुग्राह्यं पूर्वमननुगृह्य पश्चात् कार्यवशात् तं प्रति क्रियमाणोऽनुनयस्तृतीयः ।

चाणक्यटीका

चार्थे चोदना विधानमुद्देश इत्यर्थः । योऽहं स भवान्.........त्वा, यद्यत् त्वकार्यं तन्ममेत्यादिरूपग्रहः आत्मसात्करणं सान्त्वं सामविशेषः । व्यसनमिति कतिचिदहान्युपरोधं ( समृताम् ? ) अहमेवं त्वय्यासक्तं श्येन इवोत्पत्योन्मथ्नामि.....ध्वंसयामीत्यादि साहाय्यदानमभ्युपपत्तिः सानाभ्यमुन्नमित्यर्थः ( ? ) । न त्वां सदा राष्ट्रविलोपादि कुर्वन्तं वारयामि, अस्यातिवृत्तस्य फलं मयि विजयिनि प्रवृत्ते ज्ञास्यसि इत्यादिना सदोष ( वच ) नमभिभर्त्सनम् ॥

अनुनयः प्रत्यायनं चित्तग्रहार्थमित्यर्थः । स त्रिविधः । तत्र अर्थकृतौ प्रयोजनस्य साधने सति तदुत्तरकालं 'सुष्ठु कृतं त्वया अस्मदमित्रस्य पार्ष्णि गृह्णता, आपद्युपयुक्ताः कति भवद्विधाः' इति । अतिक्रमे स्वकृते यथा 'इदं नः प्रणयस्खलितमेकं क्षन्तव्यम्, यतोऽक्षोभ्यसत्त्वा न कलुषीभवन्ति महान्तः' इति । पुरुषादिव्यसनेषु यथा—'मत्प्रियहितमनपेक्ष्यापि भवतास्मच्छरीरशापितेनमह्यं परिहार्य एषः' ॥

प्रतिपदपञ्चिका

भवत इत्यनेन शरीरद्रव्ययोरित्यनानात्वोपदर्शनपूर्वको य उपग्रहस्तत्सान्त्वम् । अभ्यवपत्तिमाह—व्यसने पराभिभवादौ साहाय्यादिना अनुग्रहोऽभ्युपपत्तिः । अभिभर्त्सनमाह—नदोषमिति, वधबन्धाद्यनर्थोपेतमायतिप्रदर्शनमागामिकालवेदनं तद् यथा न तिष्ठति, भवांस्तावदचिरान्न निगडपूर्णचरणं कारागृहे निक्षिप्तं इत्येवमाद्यभिभर्त्सनम् । अनुनयं त्रिविधमाह—अर्थकृताविति, अर्थः कार्यम्, कृतिः करणं, निमित्तसप्तमी चेयं, अर्थकृतावर्थकरणनिमित्तम् तद्यथा—सामवायिकादेर्दातव्योऽर्थो, मित्रेण वा याचितो न दत्तस्तन्निमित्तं असावनुमीयते । तथातिक्रमे वचनोल्लङ्घनादिके पुरुषादिव्यसनेषु पितृपुत्रामात्यभरणादिष्वनुग्राह्यो यदा नानुगृहीतः तदा स कार्यवशात् पुनरनुनीयते ।

[ शासनभेदानां निर्देशः ]

**प्रज्ञापनाज्ञापरिदानलेखाः**
**तथा परीहारनिसृष्टिलेखौ ।**
**प्रावृत्तिकश्च प्रतिलेख एव**
**सर्वत्रगश्चेति हि शासनानि ॥७०॥**

[ तत्र प्रज्ञापनालेखः ]

**अनेन विज्ञापितमेवमाह**
**तद्दीयतां चेद्यदि तत्त्वमस्ति ।**
**राज्ञस्समीपे ( व ) परकारमाह**
**प्रज्ञापनैषा विविधोपदिष्टा ॥७१॥**

---

श्रीमूला

भूयोऽप्यष्टौ शासनभेदान् श्लोकेनोद्दिशति—प्रज्ञापनेत्यादि ।

श्लोकैरेव तेषां विवरणमारभमाणः प्रथमं प्रज्ञापनलेखं व्याचष्टे—अनेनेति । प्रज्ञापना नाम महामात्रादीन् प्रति तदीयगूढपुरुषैः क्रियमाणा तन्मित्रामित्रराजपुरुषवृत्तान्तस्यावेदना । एषा विविधा बहुप्रकारा उपदिष्टा ।ताममित्रविषयां पूर्वार्धेन प्रदर्शयति—अनेन राजानुचरेण देवदत्तनाम्ना विज्ञापितं राजान्तिके 'महामात्रेण कुतश्चिन्निधिरधिगत आत्मसात्कृत' इति । विज्ञापितश्च राजानेन प्रकारेणाह—'यदि महामात्रः स्वयं तं निधिं न प्रयच्छति तदाहमेव तं द्विगुणमाहारयिष्यामी'ति । तत्त्वमस्ति चेद्यदि तद् दीयतां, यदि निधिद्रव्याधिगमः सत्यः, तर्हि तद् दीयतां राज्ञे इत्यर्थः । मित्रविषयां तृतीयपादेन दर्शयति—राज्ञः समीपे वरकारम् आह कल्याणं कर्म त्वया क्रियमाणं निवेदयति, अर्थाद् देवदत्तादिः । इह चेत्पदयदिपदयोः सहप्रयोगोऽपिशब्दचशब्दयोरिव द्रष्टव्यः ।

चाणक्यटीका

निन्दादिषु प्रज्ञापनादीन् लेखजानर्थानाह—प्रज्ञापनेति । अस्य निर्देशमाह—शासनानीति लेखा इत्यर्थः ।

अस्य निर्देशमाह—अनेनेति । स्वाभिप्रायोपदेशार्थं पराभिप्रायाविष्करणं प्रज्ञापनम् । तद्यथा स्वाभिप्रायाविष्कारेण कस्यचित् किञ्चिद् राजगामि द्रव्यमित्थं मन्त्र्यादीनामन्यतमः अनुजिघृक्षन्निव राष्ट्रमुख्यादेर्लिखति-अनेन एवं संज्ञकेन विज्ञापितम्—अस्य राष्ट्रमुख्यस्य राजार्होऽश्वोस्तीति । राजापि एवमाह—अस्मादेव तेनाहमाराधित इति । तस्मात्त्वां प्रज्ञापयामिनद्दीयते चेद् राजः यदिचेत्तवास्ति को

[ आज्ञालेखः ]

**भर्तुराज्ञा भवेद्यत्र निग्रहानुग्रहौ प्रति ।**
**विशेषेण तु भृत्येषु तदाज्ञालेखलक्षणम् ॥७२॥**

[ परिदानलेखः ]

**यथाऽर्हगुणसंयुक्ता पूजा यत्रोपलक्ष्यते ।**
**अप्याधौ परिदाने वा भवतस्तावुपग्रहौ ॥७३॥**

---

चाणक्यटीका

लाभ इतिचेद् राजः समीपे वरकारमाह स एव लेखिता—एवं मयाज्ञातं राज्ञः शकाशाद्वास्य क्रियाभिप्रेतस्य ते निष्पत्तिरवश्यं भाविनीति । प्रज्ञापनैषा विविधोपदिष्टा न केवलंधनविषया । तद्यथा—तेन विज्ञापितः स चोरान्निवारयितुं क्षम इति, राजाप्येवमाह—पश्यत अस्मदाज्ञया विना—प्यनेन द्वित्रैरहोभिर्निगृहीत इति । एवमात्मसंभावनां बुध्वा निगृह्णासि चेन्महान्तौ स्थानमानवनुभविष्यसीति ॥

प्रतिपदपञ्चिका

भूयोऽप्यष्टौ प्रज्ञापनादिशासनभेदांच्छलोकेनोद्दिश्य श्लोकैरेव व्याचष्टे । प्रज्ञापनेत्यादि, सुबोधम् ।

अनेन विज्ञापितमित्यादि । केनचिन्महामात्रादिना शत्रुमित्राद्युपलब्धये राज्ञो गूढचरः प्रणिहितो यथोपलब्धं स्वेनावेदयति । तद् यथा-अनेकदवता दत्तेन केनचिद् वा विज्ञापितं राज्ञस्समावेदितम् यथा किल त्वया प्रभूतार्थकं निधानमुपलब्धमिति एवमाहेति, तेन विज्ञापिते सति राजा एवमाह—वक्ष्यमाणश्चेच्छब्दोऽत्र सम्बध्यते । यद्यसौ स्वयमेवदा(वाह)शोभनं अन्यथा स्वयमेव बहुतरमाह रिष्यामीत्येवमाह चेत् तद्दीयतामिति ।

गूढपुरुषवचनं यदि तन्निधानकं तत्वनिश्चितमेतत् भवताऽविलम्बितं[1] राज्ञः प्रेष्यतामित्याद्यतं साम्प्रतं सुहृद्वार्तामाह—राज्ञस्समीप इति, अयं विष्णुमित्रो राज्ञः समीपे(वरा)परकारं शोभङ्कारं त्वदीयं सर्वमाह—सर्वंदागुणप्रग्रहणपर इति,[2] तद्भवता तदुपरि तादृशेनैव भवितव्यमित्येवमादिका विविधा बहुप्रकारा उपदिष्टा अधीता ।

श्रीमूला

सामान्यतो यस्मिन्कस्मिंश्चिज्जने विषये विशेषेण पुनर्भृत्येषु विषये निग्रहमनुग्रहं वाधिकुर्वती भर्तुराज्ञा यस्मिन् लेखे, स आज्ञालेख इत्याह—भर्तुरित्यादि ॥

---

१. अपिसम्मितम् —पा०

२. इत्यर्थः । —पा०

### श्रीमूला

परिदानलेखमाह—यथार्हेत्यादि। यत्र यस्मिन् लेखे, यथार्हगुणसंयुक्ता उत्तममध्यमाधमसम्बोध्यतारतम्यानुसारिणी, पूजा 'धार्मिकस्य गुणवतस्तवेदमसदृशं दुःखमुपनतं, किं कुर्मः, क्षन्तव्यमेव विवेकिभिरीदृशं कथञ्चिद्' इत्युक्तिरूपः शोककाले, 'स्वनियोगसविशेषानुष्ठानस्यापर्याप्तमपीदमस्माभिर्यत्किञ्चित् पारितोषिकं दीयमानं स्वीकरोतु भवानि'त्युक्तिरूपः स्वामिपरितोषकाले, स्वामिबहुमानः, उपलक्ष्यते, स परिदानलेख इति विधेयाध्याहारः, तस्यैव लक्षणीयतया क्रमप्राप्तत्वात्। तस्य विषयद्वैविध्येन द्वैविध्यं सूचयन्नाह—अपीति। तौ परिदानलेखौ, अप्याधौ परिदाने वा, अपिवाशब्दौ समुच्चयार्थौ, आधिर्वन्धुमरणनिमित्ता भृत्यानां मनोव्यथा परिदानं परिरक्षणं भृत्यविषयदयाविष्करणमिति यावत्, आधौ च परिदाने च उपग्रहौ स्वीकारहेतू स्वतोतिशयप्रतिपत्तिहेतू, भवतः॥

### चाणक्यटीका

भर्त्तुराज्ञेति। अयमस्माभिः श्रेष्ठिपदादपनीतः, अयं वास्मिन् पदे स्थापित इति। विशेषेणतु भृत्येषु कदाचित् सामन्तेष्वपि स्याद् भवतायं देशः परित्याज्यः, अथवा ते देशोऽपरो मया दत्त इति॥

यथार्हेति। यथार्हं हीनमध्याधिकैर्गुणैर्युक्ते हीनमध्याधिकैव प्रशंसा लेखे यत्रोपलभ्यते। लिखितं कस्मिन् विषय इत्याह—आधाविति चित्तपीडायाम्, कथं भवन्तोऽपीदृशा विषीदन्तीति। परिदाने वेति उत्सवे वा, परिदीयते अस्मिन्निति-कृत्वा। पुनः कल्याणभाक् प्रभावसम्पत्तौ द्विषत्प्रतापहारिण्यां यतितव्यमिति। भवतस्तावु पग्रहाविति परस्वीकारविषयत्वात् तौ उपग्रहौ। आधावपि परिदानसंप्रयुक्तः कार्यइति परिदानलेख इत्यभिधीयते॥

### प्रतिपदपञ्चिका

आज्ञामाह—भर्तुराज्ञा भवेद्यत्र[1] भर्तुः स्वामिनो, यत्र यस्मिन् लेखे निग्रहानुग्रहौ प्रत्याज्ञा भवति। तद् यथा—अमुको नाम कश्चित् गृहीतसर्वस्वः कारायां प्रक्षेप्तव्य इति निग्रहः। यथामुष्मै शतसाहस्रं देयमित्यनुग्रहः विशेषेण बाहुल्ये भृत्येषु राजानुजीविषु दुर्गराष्ट्रान्तपालादिषु तद्विपर्ययेण तदाज्ञालेखस्य लक्षणम्। परिदानमाह—यथार्हगुणसंयुक्तति, यथोक्तगुणसमन्विता, यत्र यस्मिन् लेख उपलभ्यते। अप्याधौ मनोदुःखे बन्धुमरणार्थनाशादिनिमित्ते परिदाने शरीररक्षणादिके अपिशब्दाद्विपरीतेऽपि पुत्रजन्मादौ विशेषेण ग्रहणम्। अत्राप्यनुवर्तते। विशेषेणाधौ परिदाने वा, यदुपग्रहौ उपग्रहनिमित्तौ लेखौ भवतः। [2]उपग्रहः स्वीकारः, तौ परिदानलेखौ। अत्र च परिदानशब्दो[3] व्याख्यातः द्विरावर्तते।

तत्रैकः परिदानशब्दः सप्तम्यन्तः स्वार्थाभिधायकः। द्वितीयस्तु द्विवचनान्तो लेखविशेषसंज्ञावाचक इति।

---

१. अमुकनामा।—पा० २. उपग्रहस्वीकार हेतू।—पा० ३. व्याख्यानाद् द्विरावर्तते।

[ परिहारलेखः ]

जातेर्विशेषेषु पुरेषु चैव
ग्रामेषु देशेषु च तेषु तेषु ।
अनुग्रहो यो नृपतेर्निदेशात्
तज्ज्ञः परीहार इति व्यवस्येत् ॥७४॥

[ निसृष्टिलेखः ]

निसृष्टिस्थापना कार्या करणे वचने तथा ।
एष वाचिकलेखस्स्यात् भवेन्नैसृष्टिकोऽपि वा ॥७५॥

---

श्रीमूला

परिहारलेखमाह—जातेरिति । अमुकस्य कालस्यामुकब्राह्मणेभ्यः करो न ग्राह्य इत्येवंप्रकारो यो जातिविशेषविषयोऽनुग्रहः, अमीषु नगरेषु वणिग्भ्यः शुल्कममुकस्य कालस्य न ग्राह्यमित्येवंविधो यः पुरविषयः, नवागतकुटुम्बिभ्यः इयतः कालस्य न ग्राह्यः कर इत्येवंप्रायो यो ग्रामविषयः, न कोऽपि राजभागधेयोऽमुकदेशे कालस्यैतावतो ग्राह्य इत्येवञ्जातीयो यो देशविषयः, स सर्वविधोऽप्यनुग्रहो राजशासनात् प्रवृत्तः परीहारसंज्ञित इति लेखप्रकाराभिज्ञो जानीयादिति श्लोकार्थः । तत्रानुग्रहः कश्चित् कराग्रहणरूपः, कश्चित् स्वयं धनदानरूपः कश्चिदुभयरूप इति त्रिप्रकारो वेदितव्यः ॥

निसृष्टिलेखमाह—निसृष्टीत्यादि । कार्यकरणे तथा वचने, निसृष्टिस्थापना कस्यचिदाप्तपुरुषस्य प्रामाण्याख्यानम् 'अमुकस्य क्रिया ममैव क्रिया अमुकस्य वचनं

चाणक्यटीका

जातेर्विशेषेष्विति । ब्राह्मणादिषु । मद्राष्ट्रे ब्राह्मणानां करो न ग्राह्यः तन्तुवायैर्नांशविष्टिः कार्येषु । पुरेषु वा स्थानीयादौ वास्तुकरः प्रतिमुक्तः इति । ग्रामेषु देशेषु च नानाविधेषु अस्यां दशग्राम्यां न सिञ्चेद्यदि देशे पञ्चवार्षिकः ( प्रधा ? ) नग्राह्य इति अनुग्रहो यो नृपतेरादेशाल्लिख्यते । तज्ज्ञः ज्ञाता । परीहार इतिव्यवस्येत् ॥

प्रतिपदपञ्चिका

परिहारमाह—जातेर्विशेषेष्वित्यादि, जातिविशेषादयः प्रतीताः, तेषु विषयभूतेषु । तद्यथा राजा समाहर्त्रादिर्लिखति, अमीषां ब्राह्मणानां दण्डकरावनुग्राह्यौ । पुरेषु अमीषां वणिजां भाण्डमूल्यनिमित्तमेतावद्देयम्, एतावन्ति वर्षाणि शुल्कादि च न ग्राह्यमिति, तथाऽमुष्मिन्ग्रामे नवागतानां कुटुम्बिनां विभजते निमित्तमेतावद्देयम्, न च वर्षङ्करमुचितं ग्राह्यमिति । एवं देशेष्वपि योजनीयम् । अनुग्रह उपकारः स कदाचित्स्ववित्तदानेन कदाचिदुचिताग्रहणेन, कदाचिदुभयथा नृपतेर्निदेशाद्राजाज्ञया राज्ञः राजशासनाभिज्ञः परिहारमित्येवंसंज्ञकं लेखं व्यवस्येत् जानीयात् ।

२०

[ प्रावृत्तिकम् ]

**विविधां दैवसंयुक्तां तत्त्वजां चैव मानुषीम् ।**
**द्विविधां तां व्यवस्यन्ति प्रवृत्तिं शासनं प्रति ॥७६ ।**

---

श्रीमूला

ममैव वचनमि'त्येवं रूपं, निसृष्टिलेख इति लक्ष्यस्याध्याहारः क्रमप्राप्तत्वात् । एतस्य प्रकारद्वयमाह—एष निसृष्टिलेखः, वाचिकलेखः स्यात् वचनप्रमाणीकरणाख्यायी सन् वाचिक इति वक्तुमर्हः, नैसृष्टिकोऽपि वा भवेत् क्रियाप्रमाणीकरणाख्यायी सन् नैसृष्टिक इति वक्तुमर्हः ॥

प्रावृत्तिकमाह—विविधामिति । विविधाम् अनेकप्रकारां, दैवसंयुक्तां यथाकालवृष्टिपातसुभिक्षाद्यनुकूलदैवफलसिद्धिसम्बद्धाम् अग्निवात्योपप्लवादिदुर्दैवफलसिद्धिसम्बद्धां च, तत्त्वजां पारमार्थिकीम्, मानुषीं चैव यातव्यसमुच्छेदादिरूपां परचक्रचोरादिजनितराज्योपद्रवादिरूपां च, तां प्रवृत्तिं प्रावृत्तिकव्यपदेशनिमित्तभूतां वार्तां, शासनं प्रति लेखविषये, द्विविधां व्यवस्यन्ति शुभाशुभात्मना द्विप्रकारां निश्चिन्वन्ति । प्रवृत्तिद्वैविध्यवचनभङ्ग्या चानया तन्निवेदनफलकस्य प्रावृत्तिकलेखस्य द्वैविध्यमभिहितं बोद्धव्यम् ॥

चाणक्यटीका

निसृष्टिस्थापनां राज्ञः अनुज्ञाप्रख्यापनं कुर्यात् लिखितव्यम् । करणे वचने तथा यदनेन कृतं यद्वा अनेनोक्तं तत् प्रमाणं श्रद्धातव्यमिति । निसृष्टिः प्रयोजनमस्येति नैसृष्टिक इति वाचिकलेखे संज्ञा द्वितीया ॥

विविधामिति । इहाग्निर्दुर्भिक्षम्, आरोग्यं सुभिक्षमित्यशुभां शुभां च दैवजां चैव मानुषीमपि, यथा—कन्या ते गर्भिणी पुत्रस्ते जात इति । प्रवृत्तिं वार्त्ताम् अध्यवस्यन्ति दैवमानुषभेदाद् द्विविधं शासनलेखं प्रति लिखितव्यतया, अयमसौ प्रवृत्तिप्रयोजनः प्रावृत्तिक इति ॥

प्रतिपदपञ्चिका

निसृष्टे लेखेमाह—निसृष्टिस्थापनेत्यादि, निसृष्टिः प्रमाणीकरणं तस्मात् स्थापनाकरणं, तद्यथा—राजा लिखति, एष मयाप्ततमः प्रहितो यदनेन कृतमहितं वा तत्सर्वं नः प्रमाणमिति । एष इति, यत्र वचनं प्रमाणीक्रियते, स वाचिकलेखः । यत्र क्रिया स नैसृष्टिकः । प्रावृत्तिकमाह—विविधामित्यादि । विविधां दैवसंयुक्तां वृष्टिपातनदीपूरणादिसंयुक्ताम् अग्निमरकाद्युपेतां च तत्वजां सुनिश्चितां मानुषीममित्रयातव्यसमुच्छेदिकां परचक्रचोराधिकारिकृतराज्यविभ्रमादिकां च तामेव द्विविधां[1] व्यवस्यन्ति कथयन्ति । प्रवृत्तां कुशलाकुशलरूपां । शासनं लेखं प्रति ।

---

१. विविधाम् ।—पा०

[ प्रतिलेखः ]

दृष्ट्वा लेखं यथातत्त्वं ततः प्रत्यनुभाष्य च ।
प्रतिलेखो भवेत्कार्यो यथा राजवचस्तथा ॥७७॥

[ सर्वत्रगः ]

यत्रेश्वरांश्चाधिकृतांश्च राजा
रक्षोपकारौ पथिकार्थमाह ।
सर्वत्रगो नाम भवेत्स मार्गे
देशे च सर्वत्र च वेदितव्यः ॥७८॥

---

श्रीमूला

प्रतिलेखमाह—दृष्ट्वेति । लेखं परस्मादागतं, यथातत्त्वं दृष्ट्वा यथावास्थितपदपदार्थानतिक्रमेण पूर्वं स्वयं वाचनया विज्ञाय, ततः प्रत्यनुभाष्य च पश्चाद् राज्ञः सकाशेऽनुवाच्य च, यथा राजवचः राज्ञ उत्तरवचनं भवति, तथा प्रतिलेखः कार्यो भवेत् ॥

यत्र लेखे राजा ईश्वरान् दुर्गराष्ट्रान्तपालादीन् समाहर्तृप्रशास्तृप्रभृतीनधिकृतांश्च पथिकानां पथि सहायदानलक्षणां रक्षां भक्तयवसेन्धनादिदानलक्षणमुपकारं चाज्ञापयति, स लेखः राज्ञो देशान्तरसञ्चारणे स्वनिवासदेशे सर्वस्मिंश्च काले लेखनार्हत्वान्नाम्ना सर्वत्रगो भवेदित्याह—यत्रेश्वरांश्चेत्यादि ॥

चाणक्यटीका

दृष्ट्वा लेखं परेण प्रेषितं यथातत्त्वं ततो लेखनाद् वर्णनारहितं यथाप्रधानमर्थं प्रत्युच्चार्य च प्रतिवचनसमर्थोलेखो भवेत् । कर्तव्ये लेखने यथावधारितवतो राज्ञो यादृशं वचनं तदनुरूपमित्यर्थः ॥

यत्रेति । ( प ? य ) त्र लेखे अन्तपालाटविकादीन् ईश्वरान् अधिकृतांश्च समाहर्त्रादीन् । स्वामी राजा । रक्षोपकारौपयिकार्थमाह—अयं दूतः क्षेमेण सुप्रयुक्तपानभोजनावासः अति ( यात ? वाह ) यितव्य इति । सर्वत्रगो नाम पत्रैकदेशमुद्रया साधारणो भवेत् । सर्वत्र यावत्जात्या प्रभवति तावति वेदितव्यः । इत्यष्टौ लेखभेदाः ॥

प्रतिपदपञ्चिका

प्रतिलेखमाह—दृष्ट्वा लेखमिति, परस्मादागतम् यथा तत्वमन्यूनानतिरिक्तपदपदार्थादिकं प्रति प्रत्यनुभाष्य अनुवाच्य ततः प्रतिलेखो भवेत् । कार्यो यथा—राजवचस्तथेति, स्वमनीषिकापरिहारार्थं सर्वत्रगो नामा यत्रेश्वरांश्चेत्यादि, ईश्वरा दुर्गराष्ट्रान्तपालादयः । अधिकृताः समाहर्त्रादयः । रक्षोपकाराविति । रक्षा सहायेषु पथिषु सहायदानादिना उपकारो भक्तयवसेन्धनादिदानेन उचितस्याग्रहणेन

[ शासनाधीनसन्धिविग्रहानुष्ठानो-
पयोग्युपायाः ]

**उपायाः सामोपप्रदानभेददण्डाः ।**

[ पञ्चविधसामोपदपानम् ]

**तत्र साम पञ्चविधम्-गुणसङ्कीर्तनं सम्बन्धोपाख्यानं परस्परोपकार-सन्दर्शनमायतिप्रदर्शनमात्मोपनिधानमिति । तत्राभिजनशरीरकर्मप्रकृति[1]श्रुतद्रव्यादीनां गुणागुणग्रहणं प्रशंसा स्तुतिर्गुणसङ्कीर्तनम् । ज्ञातियौन-मौखस्रौवकुलहृदयमित्रसङ्कीर्तनं सम्बन्धोपाख्यानम् । स्वपक्षपरपक्षयोरन्यो-न्योपकारसङ्कीर्तनं परस्परोपकारसन्दर्शनम् । अस्मिन्नेवं कृते इदमावयो-र्भवतीत्याशाजननमायतिप्रदर्शनम् । 'योऽहं स भवान्, यन्मम द्रव्यं तद्भवता स्वकृत्येषु प्रयोज्यताम्' इत्यात्मोपनिधानमिति ।**

---

प्रतिपदपञ्चिका

च रक्षोपकारौ पथिकार्यम् अध्वगसार्थादिनिमित्तम् राजा यत्र लेखे समादिशति सर्वत्रगो देशात् देशान्तरगमने देशे च विजिगीषुदेश एव सर्वत्रग्रहणं उभयत्र निषिद्ध-त्वज्ञापनार्थमिति ।

श्रीमूला

शासनाधीनत्वं सन्धिविग्रहयोरुक्तमधस्तात् । सन्धिविग्रहानुष्ठानस्य उपाय-प्रयोगसापेक्षत्वात् तेष्वपि व्युत्पत्तिः शासनलेखकस्यापेक्षितेति कृत्वा तान् दर्शयति—उपाया इत्यादि ।

तत्र साम्नः पञ्च प्रभेदानुद्दिशति—तत्र सामेत्यादि ।

तत्र प्रथमं सामप्रभेदं व्याचष्टे—तत्राभिजनेत्यादि । अभिजनः कुलं, शरीरं कर्म च प्रसिद्धे, प्रकृतिः स्वभावः, श्रुतं शास्त्रजनितः संस्कारः, द्रव्यं रथगजतुरगादि-परिग्रहः, आदिपदेन वयोरूपादिग्रहणम् । अभिजनादीनामेषां गुणग्रहणं गुणस्य वस्तुसतः स्वरूपाख्यानं, गुणागुणग्रहणमिति पाठे गुणागुणयोर्वस्तुसतोः स्वरूपाख्यानं प्रशंसा सश्लाघमाख्यानं, स्तुतिरविद्यमानगुणकीर्तनञ्च, गुणसंकीर्तनं नाम भवति ।

सम्बन्धोपाख्यानं व्याचष्टे—ज्ञातीत्यादि । ज्ञातिः समानकुलोत्पन्ना, यौनो योनिकृतः सम्बन्धो विवाहाख्यः, मौखो मुखकृतः सम्बन्धो वाक्सम्बन्धः, शिष्याचार्य भावलक्षणः, स्रौवः स्रुवनामकयज्ञपात्रविशेषकृतः सम्बन्धो याज्ययाजकभावरूपः, कुलं पूर्वपुरुषपरम्परा, हृदयं मनोनिबन्धः, मित्रम् उपकारकं, ज्ञात्यादीनां सप्तानां सङ्कीर्तनं सम्बन्धोपाख्यानमित्युच्यते ।

---

१. 'श्रुति' इति पा० ।

श्रीमूला

स्वपक्षेत्यादि। स्वपक्षपरपक्षयोः, अन्योन्योपकारसङ्कीर्तनं परस्परोपकारो यथा स्यात् तथा कथनं, परस्परोपकारसन्दर्शनं नाम सामभेदः।

अस्मिन्निति। अस्मिन् कार्ये, एवं कृते अनेन प्रकारेणानुष्ठितेसति, आवयोरिदं भवति तव च मम चैतत् फलं भविष्यति इत्याशाजननम्, आयतिप्रदर्शनं नाम।

योऽहमिति। योऽहं स भवान् आवामभिन्नौ, तस्मात्, मम यद् द्रव्यं भूमिहिरण्याद्यस्ति, तद् भवतां स्वकृत्येषु प्रयोज्यतां स्वीयद्रव्यनिर्विशेषमुपयुज्यताम्, इतीदृशम्, आत्मोपनिधानं नाम पञ्चमः सामप्रभेदः।

चाणक्यटीका

सन्धिविग्रहयोर्मूलं शासनम्। ( सन्धा ? ) उपायः सामादयः अत्रान्तर्भवन्तो वर्ण्यन्ते। तत्राभिजनादीनां गुणग्रहणं प्रशंसा लिच्छवयोयूयमित्यभिजनस्य। बहुशालिन इति शरीरस्य। कर्मणो यज्वानइति। प्रकृतेः स्वभावस्य साध्वाचार इति। श्रुतस्य वेदवेदाङ्गवित् इति। द्रव्यादीनां वित्तेशो महासेन इति। एवंगुणानां विद्यमानानां प्रशंसा। स्तुतिश्चाभिप्रेताध्यारोपणमुभयं विद्यमानानामध्यारोपितानाञ्च गुणानांसङ्कीर्त्तनं परस्येति॥

जातियौनेति एकजातीया वयं भवन्तश्च। अपरे ज्ञातिशब्दं पठन्ति। ज्ञातिर्मातृपक्षः—या ते भगिनी सा मे मातुलानीति। यौनेन सम्बन्धेन या त्वद्भगिनी सा मम भ्रातृभार्येति। मौखेन सम्बन्धेन अस्मत्पितुः सकाशात्त्वयाधीतमिति। स्रौवेण अस्मत्पितुर्यज्ञे त्वत्पिता होतासीत् त्वपितुर्यज्ञे वा अस्मत्पितेति सम्बन्धेन सम्बद्धा वयं भवन्तश्च। एकं कुलं पितृसम्बद्धमस्माकम्। एकहृदया वयं-यादृशं मे चित्तं तादृक् तवापीति। एकमित्राश्चेति यत् साधारणसङ्कीर्त्तनं तत् सम्बन्धोपाख्यानम्॥

स्वपक्षपरपक्षयोरिति न केवलमावयोरव अस्मत्पक्षाणामपि बन्धुभृत्यमित्राणां युष्मदीयैः सह उपकार्योपकारकभावो नित्याविच्छिन्न इति सन्दर्शनम् उपकाराख्यानम्॥

अस्मिन्नेवमिति। अस्मिन्नन्तरोच्छेदे कृते निष्कण्टकमावयो राष्ट्रं भवितेति। आयतिरागामिकालः॥

यन्मे द्रव्यमिति। शरीरमात्रम् ( एके ? अनेकम् ) अपि एकचित्तत्वादर्थतो योऽहं स भवान् अतश्च यन्मम द्रव्यं तत् तव वाङ्मात्रेण तत्स्वकार्ये नियुज्यतामित्यात्मनोऽर्पणम्॥

प्रतिपदपञ्चिका

साम्प्रतं शासनविधिमभिधाय तन्मूलत्वात् सन्धिविग्रहयोरिति शासनमूलत्वं षाड्गुण्यस्योक्तम्। तस्य च षाड्गुण्यस्य प्रयोग उपायपूर्वकः तदुपायप्रयोगोऽपि लेखेनावगन्तव्य इति, तत्प्रतिपादनार्थमाह—उपायस्सामोपप्रदानभेददण्डाः इति, उपायास्साधनानि। तत्रेति तेषूपायेषु साम्नो गुणसङ्कीर्तनादीन् पञ्च प्रभेदानभिधाय

[ दानभेददण्डानां स्वरूपम् ]

**उपप्रदानमर्थोपकारः शङ्काजननं निर्भर्त्सनं च भेदः। वधः परिक्लेशोऽर्थहरणं दण्ड इति।**

---

प्रतिपदपञ्चिका

स्वयमेव व्याचष्टे तत्रेति, तेष्वपि गुणग्रहः, सङ्कीर्तनं तावदुच्यते। तत्राभिजनशरीरकर्माणि प्रतीतानि। प्रकृतिः स्वभावः। श्रुतं शास्त्रसंस्कारः। द्रव्यं द्विपदचतुष्पदादिपरिग्रहः। आदिग्रहणं च बन्धुवयोनिवासादिपरिग्रहार्थम्। एतेषां प्रशंसा स्तुतिरिति गुणानुच्चार्य[2]तद्वर्णनाद्वारेण स्तुतिर्गुणग्रहणं प्रशंसा स्तुतिरिति केचित्। अन्येतु गुणग्रहणं भूतानुवादः, प्रशंसा किंचिदधिकार्थवचनं, स्तुतिरविद्यमानगुणाद्यारोपः। स च पात्रविशेषेण प्रयुज्यत इति। अपरे स्तुतिशब्दान्नाधीयन्त एवेत्येतद्गुणसङ्कीर्तनम्। सम्बन्धोपाख्यानमाह—ज्ञात्यादीनां सप्तानां सङ्कीर्तनं सम्बन्धोपाख्यानमिति। तत्र ज्ञातिः सकुल्यः। यौनो वैवाह्यः। मौखः शिष्याचार्यसम्बन्धः। स्रौवो याज्ययाजकसम्बन्धः। कुलमनंतरागीतपितृपितामहादिपुरुषाः। हृदयं स्नेहः। शौर्यत्यागादीत्यपरे। मित्रमुपकारकमुपकृतमित्येषां यत्संकीर्तनं तत्सम्वन्धोपाख्यानम्। परस्परोपकारसन्दर्शनमाह—स्वपक्षपरपक्षयोरिति।

उभयत्र पक्षग्रहणं तदाश्रितानामपि परस्परोपकारित्वख्यापनार्थम्। आयतिप्रदर्शनमाह—अस्मिन्नेवं कृत इति, अस्मिन् सन्ध्यादिके। एवमनेन प्रकारेण, कृते इदं भूमिहिरण्यदानादिकमावयोर्भविष्यतीत्याशाजननं, कृष्णाभिवर्धनमायतिप्रदर्शनम्। आत्मोपनिधानमाह—योऽहं स भवान् यन्मम द्रव्यं भूतिकोशदण्डादि तद्भवतात्मीयाविशेषेण स्वकृत्येष्वात्मकार्येषूपयुज्यतामित्येतदात्मोपनिधानमित्येवं पञ्चप्रकारं सामाभिहितम्।

श्रीमूला

उपप्रदानाख्यं द्वितीयमुपायं व्याचष्टे—उपेत्यादि। अर्थोपकारः भूमिहिरण्यादिरूपार्थदानेनोपकारकरणम्, उपप्रदानम्। तृतीयमुपायं व्याचष्टे—शङ्केत्यादि। मित्रेष्वेकस्यापकाराधानेनान्येषां हृदि 'अस्मानप्यसावुच्छेत्स्यती' ति शङ्काया अपरागस्पर्धाहेतोरुत्पादनमेको भेदः, 'त्वामविधेयमभिघातयिष्यामी' त्येवम्प्रकारं निर्भर्त्सनमपरो भेदः। दण्डं व्याचष्टे—वध इत्यादि। वधो व्यापादनं, परिक्लेशो बन्धनताडनादिभिर्दुःखोत्पादनम्, अर्थहरणं धनापहारः, इदं त्रयं दण्डः। इतिशब्दः समाप्तौ, लेखगुणाख्यानं परिसमाप्तमित्यर्थः।

---

१. गुणग्रहण प्र. अधि। —पा०

२. तद्वर्णनेन द्वारेण स्तुतिरिति केचित्। —पा०

[ लेखनदोषाणां परिगणनम् विवरणं च ]

**अकान्तिः व्याघातः पुनरुक्तम् अपशब्दः सम्प्लवः इति लेखदोषाः । तत्र कालपत्रकम् अचारुविषमविरागाक्षरत्वं अकान्तिः । पूर्वेण पश्चिमस्यानुपपत्तिर्व्याघातः । उक्तस्याविशेषेण द्वितीयमुच्चारणं पुनरुक्तम् । लिङ्गवचनकालकारकाणामन्यथाप्रयोगोऽपशब्दः । अवर्गे वर्गकरणं वर्गे चावर्गक्रिया गुणविपर्यासः सम्प्लव इति ।**

---

चाणक्यटीका

अर्थोपकार इति । अर्थेन परस्योपकारः आप्तसिद्धिस्तु पाञ्चविद्धयेनैवोपपद्यते । 'देयविसर्गः गृहीतानुवर्त्तनम् आत्तप्रतिदानम् स्वद्रव्यदानम् अपूर्वम् परस्वेषु स्वयङ्ग्राह दानं चेति' ( अधि० ९ अध्या० ६. ) ।

शङ्काजननमिति । 'अयं तदनुग्रहेण वृद्धं कुमारीव त्वामेवोच्छेत्स्यति' इत्यादिना शङ्काजननम् । 'अस्यवा अस्मदमित्रानुग्रहस्व परिणाममनुभवितासि' इत्येवं तर्जनं च भेदः, परस्माद् विश्लेषणमित्यर्थः ॥

प्रशासनमेकाङ्गस्य वधः । संरोधोऽङ्गुलिसन्दंशादिश्च परिक्लेशः अर्थहरणं शास्त्रोक्तमनुवतं वा अर्थादानम् । इति ॥

प्रतिपदपञ्चिका

उपप्रदानमाह—अर्थोपकार इति, अर्थेन भूमिहिरण्यादिना य उपकारस्तदुपप्रदानम् । भेदमाह—शङ्काजननमभिभर्त्सनं च भेद इति, तत्र शङ्काजननं चित्तभ्रान्तिकरम् । तद्यथा, एकस्य विविधसारं वा घातयेयुः इतरेषु मैत्रीं ब्रुवाणाः इत्यादि । अभिभर्त्सनं तर्जनम्, अवश्यं भवतःस्सिद्धिश्चेदादिप्रकारैरपि व्यापादयिष्यामीति । दण्डमाह—वध इत्यादि, वधो घातः, परिक्लेशो यातना, अर्थहरणं वित्तादानम् । इतिशब्दो लेखगुणपरिसमाप्त्यर्थः ।

श्रीमूला

अथ लेखदोषानाह—अकान्तिरित्यादि ।

तत्रेति । तत्र लेखदोषेषु पञ्चसूद्दिष्टेषु मध्ये, कालपत्रकं काले मसीप्रसरणात् स्वभावतो वा मलिने पत्रे लिखितम्, अकान्तिः तदाख्यो दोषः । अचारुविषमविरागाक्षरत्वम् अचारूणि असुन्दराणि विषमाणि अनियतस्थौल्यसौक्ष्म्याणि विरागाणि शुद्धोदकप्रायमषीलिखितानि चाक्षराणि यस्मिंस्तस्य भावस्तत्त्वं च, अकान्तिः । एवमस्य दोषस्याधारप्रयुक्तत्वेनाधेयप्रयुक्तत्वेन च द्वैविध्यं दर्शितम् ।

व्याघातमाह—पूर्वेणेत्यादि । पूर्वेणार्थेनोत्तरस्यानुपपत्तिर्विरोधः, व्याघातः, यथा 'प्रणम्याज्ञापयती' ति । इह हि प्रणामाज्ञापनयोर्विरोधः प्रतीतः ।

श्रीमूला

पुनरुक्तमाह—उक्तस्येत्यादि । तद्यथा—'पूज्यो मान्यो, इत्यादि लेखनम् ।

अपशब्दं व्याचाष्टे—लिङ्गेत्यादि । स्त्रीलिंगे 'प्रयोक्तव्ये' पुन्नपुसंकप्रयोगो लिंगस्यान्यथाप्रयोगः, एकवचने द्विबहुवचनप्रयोगो वचनस्यान्यथाप्रयोगः, वर्तमाने भूतभविष्यत्प्रयोगः कालस्यान्यथाप्रयोगः, कर्मकारके कर्तृकरणादिकारकप्रयोगः कारकस्यान्यथाप्रयोगः लिङ्गादीनामेवञ्जातीयोऽन्यथाप्रयोगोऽपशब्द इत्युच्यते ।

संप्लवमाह—अवर्ग इति । वर्गो यतिश्छेद इति पर्यायाः, अवर्गे वर्गायोग्ये वर्गकरणं, वर्गे वर्गयोग्ये अवर्गक्रिया च इति द्वयं, गुणविपर्यासः गुणानामर्थक्रमादि-लेखगुणानां वैपरीत्यं च, संप्लवो नाम नाम्ना भवति ।

चाणक्यटीका

लेखसंपद्विपरीता दोषा एव तेभ्योऽन्येअकान्त्यादयः ( इत्यादिः ? ) । अकान्ति-रिति लिखित्वा परामृष्टत्वात् कालपतितं लेख्यम् । अचारूणि अनिष्पन्नत्वात् सन्दिग्धानि तकारनकारादीनामविशेषात्, विषमाणि सूक्ष्मभेदात, विरागाण्यनुज्ज्वल-त्वाद् अक्षराणि यत्र लेख्ये ।।

पूर्वेणेति प्रणम्याज्ञापयतीत्यादि पूर्वेणोत्तरस्य व्याघातः । उक्तस्याविशेषेणेति भवतो ज्येष्ठेन भ्रात्रा बलवता भवान् कनीयान् भ्राता दुर्बलोऽभियुक्त इति ।।

कियन्तो हस्तिरूपाः ये प्रहिताः कार्यक्षमा वयमिति लिङ्गस्यान्यथा प्रयोगः, वर्षायामतीतायामहमेव गमिष्यामीति वचनान्यत्वम् । यद्ययं सामन्त आजगाम प्रयोजनसिद्धिर्भविष्यतोति कालस्यान्यत्वम् । भवान् दुर्गे तिष्ठेति कारकान्यत्वम् । आदिशब्दाद् वर्णविकारादयो दुर्णीतमित्यादयः ।।

खट्वामारूढ इति प्राप्ते खाट्वरूढ़स्तिष्ठतु भवान् इत्यसमासे समासकरणम् । पुरस्कृत्येति प्राप्ते पुरस्तादेति किं योक्ष्यन्त इति समासेऽप्यसमासः । गुणविपर्यास इति लेखसम्पद्विपर्यय इत्यर्थः ।।

प्रतिपदपञ्चिका

साम्प्रतं तद्विपर्ययो दोष इति प्राप्ते प्राधान्यात्प्रदर्शनार्थं वा पञ्च दोषान-कान्त्यादीन् अभिधाय व्याचष्टे-तत्रेत्यादि, तत्र अकान्त्यादिषु मध्ये कलपत्रकं लिखितो-च्छिष्टे स्वतो वा मलिने पत्रे लिखितमयमाधारदोषः ? अचारु विषमविषमविरागा-क्षरत्वं स्पष्टत्वादहारीणि ? कानिचिद्विविषमाणि कानिचित्स्थूलानि कानिचित्सूक्ष्माणि विरागाणि अत्यच्छमभिलिखितानि । अयं त्वाधेयदोषः । इत्येवमुक्तिकान्तिलेखदोषाः । असम्बन्धमाह—पूर्वेणेति, पूर्वमुक्तेनार्थेन पश्चिमस्यार्थस्य अनुपपत्तिर्व्याघातः । सोऽसम्बन्धः । तद्यथा—अवनितलगतेन शिरसाप्रणम्याज्ञापयति इति प्रणामस्याज्ञापनस्य च विरोधात् असम्बन्धः । पुनरुक्तमाह—उक्तस्याविशेषेणेत्यादि, तद्यथा—पूज्यपादा-न्माननीयानित्यादि । अपशब्दमाह—लिङ्गवचनेत्यादि, लिङ्गादीनां चतुर्णाम् अन्यथा-प्रयोगस्य स्त्रीलिङ्गे कार्ये पुंन्नपुंसकयोः प्रयोगः । अपभ्रंशो साधुपदप्रयोग इत्ययमप-शब्दः । सम्प्लवमाह—अवर्गे वर्गकरणमित्यादि-वर्गो यतिः, तस्याः स्थाने करणं अवर्गे

[ निगमनम् ]

**सर्वशास्त्राण्यनुक्रम्य　प्रयोगमुपलभ्य　च ।**
**कौटल्येन नरेन्द्रार्थे शासनस्य विधिः कृतः ॥७९॥**

[ इत्यध्यक्षप्रचारे शासनाधिकारः दशमोऽध्यायः
आदित एकत्रिंशः ]

प्रतिपदपञ्चिका

वर्गीकरणम् । तच्च न्यूनाधिकभेदात् द्विधा भवति । तत्र न्यूनत्वमर्धपदे वर्गीकरणादि । आधिक्यं च चतुःपञ्चादिपदेषु । तदेवमुभयत्रापि सम्प्लवे अर्थसाङ्कर्यम्, यतेरपि भागकरणात् अनभिव्यक्ततेत्यर्थः । गुणविपर्यास इति, यथोक्तानामर्थक्रमादिलेखगुणानां सर्वेषामविपर्यासस्तद्विपरीतदोषकरणं च सम्प्लवो नाम दोषो भवति । न(त्व)न्वर्थापत्तिन्यायात् गुणविपर्यासस्य दोषताया लब्धत्वात् तद्ग्रहणं विस्पष्टार्थमिति ।

श्रीमूला

अध्यायान्ते श्लोकमाह—सर्वेत्यादि । कौटल्येन, सर्वशास्त्राणि वार्हस्पत्यादीनि, अनुक्रम्य ज्ञात्वा, प्रयोगमुपलभ्य च शास्त्रानुष्ठानं दृष्ट्वा च, नरेन्द्रार्थे राज्ञः कृते प्रयोजनाय, शासनस्य विधिः, कृत उपदिष्टः । शास्त्रलोकदृष्टस्यापि सतः शासनविधेरिह कौटल्यकृतत्ववचनं कौटल्येन कात्स्न्र्यसौष्ठवातिशययोगसम्पादनादिति बोद्धव्यम् ।

इति कौटिलीयार्थशास्त्रव्याख्यायाम् अध्यक्षप्रचारे द्वितीयाधिकरणे
दशमोऽध्यायः शासनाधिकारः, आदित एकत्रिंशः ॥

चाणक्यटीका

धर्मार्थन्यायशब्दारोग्यविषयाणि सर्वशास्त्राणि शासनाङ्गभूतान्यालोड्य । प्रयोगं च शिष्टानाम्, अन्यैराचार्यैरप्रवर्तितपूर्वत्वात् । कौटिल्येन नरेन्द्रार्थं शासनप्रधानत्वाद् विधिः कृतः । सम्भावितत्वादनरेन्द्रैरपि यथायोगं युज्यत एवेति ॥

इति शासनाधिकारो दशमं प्रकरणम् ।
॥ दशमश्चाध्यायः ॥

प्रतिपदपञ्चिका

साम्प्रतमध्यायप्रान्ते श्लोकमाह—सर्वशास्त्राणीति, अनुक्रम्य ज्ञात्वा, प्रयोगमुपलभ्य दृष्ट्वा लक्षणं लक्ष्यं च दृष्ट्वेत्यर्थः । नरेन्द्रार्थे राजार्थे, प्रयोजने निमित्तसप्तमीयम् । शासनस्य विधिः कृत इति उपदिष्टः । कौटिल्यग्रहणं न कर्तव्यम्, विनयाधिकारिके तस्याभिहितत्वात् । उक्तंहि—

कौटिल्येन कृतं शास्त्रं विमुक्तग्रन्थविस्तरम् ॥ इति ।

तत्क्रियते शासनाधिकारः । कौटिल्येनैव कृतो नान्यैःशास्त्रकारैरिति ज्ञापनार्थमिति ।

इति भट्टस्वामिनकृतप्रतिपदपञ्चिकायाम् अर्थशास्त्रटीकायाम् अध्यक्षप्रचारिके
द्वितीयेऽधिकरणे　दशमोऽध्यायः,
आदितः एकत्रिंशोऽध्यायः । ओम् । श्रीः ।

# एकोनत्रिंशं प्रकरणम्

## एकादशोऽध्यायः

## कोशप्रवेश्यरत्नपरीक्षा

[ कोशप्रवेश्यरत्नादिस्वीकारक्रमः ]

**कोशाध्यक्षः कोशप्रवेश्यं रत्नं सारं फल्गु कुप्यं वा तज्जातकरणाधिष्ठितः प्रतिगृह्णीयात् ।**

---

### श्रीमूला

कोशप्रवेश्यरत्नपरीक्षेति सूत्रम । कोशो भाणडागारं तत्प्रवेशनार्हाणां रत्नानां माणिक्यमुक्ताप्रवालादीनां, रत्नग्रहणेन सङ्ग्राह्यद्रव्योपलक्षणात् सारफल्गुकुप्यानां च, परीक्षाऽत्रोपदिश्यत इति सूत्रार्थः ।

'कोशपूर्वाः सर्वारम्भाः' इति प्रक्रान्तायाः कोशप्रकृतेः समाहर्तृसन्निधातृव्यापारैरुत्पादनं रक्षणं च प्रागभिहितं, स्वरूपलक्षणं त्वनुक्तमिदानीमभिधीयत इति सङ्गतिः ।

कोशाध्यक्ष इति । कोशाध्यक्षः भाण्डागाराधिकृतः कोशप्रवेश्यं रत्नं मणिमुक्तादिकं, सारं चन्दनागुरुप्रभृतिकं, फल्गु पट्टदुकूलजातीयं, कुप्यं कुप्याध्यक्षप्रकरणोक्तं सारदारुवेणुवल्कादिकम् आयुधागाराध्यक्षप्रकरणोक्तं यन्त्रायुधावरणादिकं च, वाशव्दः समुच्चये, तज्जातकरणाधिष्ठितः तेषु रत्नादिषु जातास्तज्जातास्तत्सम्बद्धव्यवहारैकवृत्तय इत्यर्थः । तज्जातैः करणैः कायस्थैश्च अधिष्ठितः समन्वितः सन् प्रतिगृह्णीयात् ।

### चाणक्यटीका

अमात्यसम्पदोपेतान् सर्वाध्यक्षान् विधाय प्राधान्याद् गुणविशेषेण च शासनाध्यक्ष (स्योक्तम् ? उक्तः)। इतरेषां कर्म वाच्यम् । तत्रापि 'कोशपूर्वत्वात् सर्वारम्भाणाम् इति तदध्यक्षव्यापार एव, कोशप्रवेश्यानां प्रकर्षेणाभिमुख्येन स्थापनाऽर्हाणाम्, रत्नानामित्युपलक्षणार्थत्वाद् रत्नादीनाम्, परीक्षेति प्रकरणमुच्यते ॥

कोशाध्यक्षः कोशमात्राधिकृतः कोशप्रवेश्यं कोशप्रवेशनार्हं रत्नादिकं प्रतिगृह्णीयात्, सन्निधातुः समाहर्तुर्वा रूप्यसुवर्णयोस्तु बहुवाच्यत्वात् पृथक्करणम् ।

### प्रतिपदपञ्चिका

कोशप्रवेश्यरत्नपरीक्षेति सूत्रम् ।

कोशो भाण्डागारम् तस्मिन् प्रवेशमर्हतीति कोशप्रवेश्यम् । तद्ग्रहणं परीक्षा

[ मौक्तिकभेदाः तदुत्पत्तिहेतवः उत्त
माधमल क्षणानि च ]

**ताम्रपर्णिकं पाण्डयकवाटकं, पाशिक्यं, कौलेयं, चौर्णेयं, माहेन्द्रं, कार्दमिकं, स्रौतसीयं, ह्रादीयं, हैमववतं च मौक्तिकम्। शुक्तिः शङ्खः प्रकीर्णकं च योनयः।**

---

प्रतिपदपञ्चिका

यत्नातिशयार्थम् रत्नं मणिमुक्तादि, लुप्तनिर्देशश्च[1]। अत्रादिशब्दो द्रष्टव्यः। सारवित्[2] पल्गुकुप्यानामपि परीक्षाविधानात् प्राधान्याद्वा हस्तिवननिर्देशः। तेषां रत्नादीनां, परीक्षा कोशप्रवेश्यरत्नपरीक्षा सेहाभिधीयते इति सूत्रार्थः। सम्बन्धस्तु कोशप्रकृतेः प्रक्रान्तायाः समाहार्तृसन्निधात्रादिपरीक्षाप्रसङ्गेन मुक्तादिकुप्यान्तं सर्वं कोशान्त इति कोशस्वरूपव्या(पा)रोपदेशप्रकारैरुत्पादनरक्षणादिकमुक्तम्। इदानीं रत्नादीनां परीक्षादिप्रकारैरभिधीयत इति। अथवा "तया स्वपक्षं परपक्षं च वशीकरोति कोशदण्डाभ्यामिति" कोशोऽभिहितः। तत्स्वरूपं तु नाभिहितम्। अतस्तत्प्रवेशार्हरत्नादिपरीक्षाप्रसङ्गेन मुक्तादिकुप्यान्तं सर्वं "कोश" इति कोशस्वरूपप्रतिपादनार्थमिदमभिधीयत इति सम्बन्धः। वक्ष्यति च कोशसन्धिपूर्वयोः प्रणयेत्।

कुप्यं हस्त्यश्वं पागराद्धितमिति ? तदाह-कोशाध्यक्ष इति, कोशो भाण्डागारम् तत्र नियुक्तः कोशाध्यक्षः कोशप्रवेश्यं तत्प्रवेशार्हम्। तस्य ग्रहणं परीक्षा यत्नातिशयार्थं गुणवत्परिग्रहार्थं च। रत्नं मुक्तादि, साराश्चन्दनादयः, फल्गु पट्टवस्त्रदुकूलक्षौमवस्त्राजिनादि। कुप्यं कुप्याध्यक्षप्रदिष्टम सारदारुवेणुवल्कवल्यादि, तथा आयुधागाराध्यक्षाभिहितम्। यन्त्रशस्त्रावरणादिकं च ज्ञापकान्वक्ष्यति हि तदध्यायप्रान्ते 'इच्छामारंभनिष्पत्तिं प्रयोगव्याजमुदयम् क्षयव्ययौ च जानीयात् कुप्यानामायुधेश्वर' इति, तत्र कुप्यग्रहणत्तदध्यायपठितानामपि कुप्यसंज्ञा ज्ञाप्यते। हि विकल्पे, तत्र निपुणास्तज्जाताः, करणम् तदधिकृतपुरुषाणां सामग्री, तदधिष्ठितस्तत्समेतः प्रतिगृह्णीयात् प्रतीच्छेत्।

श्रीमूला

अभ्यर्हितत्वान्मौक्तिकस्य परीक्षां प्रथममाह—ताम्रपर्णिकमिति। मौक्तिकं, ताम्रपर्णी नाम पाण्ड्येषु प्रसिद्धा नदी तस्याः समुद्रसङ्गमप्रदेशे समुत्पन्नं, पाण्डयकवाटकं मलयकोटिपर्वतोत्पन्नं, पाशिक्यं पाटलिपुत्रान्तिकगतायां पाशिकाख्यायां नद्यामुत्पन्नं, कौलेयं सिंहलद्वीपे मयूरग्रामे कुला नाम नदी तस्यामुत्पन्नं, चौर्णेयं केरलेषु

---

१. निर्विष्टस्य। --पा०

२. सारवित्सु कुप्यादीनामपि।—पा०

श्रीमूला

मुरचिनामकपत्तनसमीपे चूर्णा नाम नदो तस्यामुत्पन्नम्। माहेन्द्रं महेन्द्रपर्वताभ्यर्णाम्भोधिसम्भवं, कार्दमिकं कर्दमा नाम पारसीकेषु नदी तस्यामुत्पन्नं, स्रौतसीयं बर्बरकूले स्रोतसी नाम नदी तस्यामुत्पन्नं, ह्रादीयं बर्बरकूले समुद्रैकदेशे श्रीघण्टो नाम ह्रदः तस्मिन्नुत्पन्नं, हैमवतं च हिमालयसम्भवं च, भवति। इत्थं मौक्तिकस्योत्पत्तिक्षेत्राणि दश भवन्ति।

मौक्तिकस्य योनीस्तिस्र आह—शङ्ख इत्यादि। शङ्खः शुक्तिश्च जलजौ प्रसिद्धौ। प्रकीर्णकं गजकुम्भादिकम्। आहुश्च—

"करका वारिधाराश्च मलयाश्चन्दनोदकम्।
शङ्खशुक्तिनिपीतं यन्मौक्तिकं तत् प्रजायते॥"
"सूकरमृगेन्द्रदंष्ट्रोद्भवानि करिकुम्भजातानि।
वंशाभोगभुजङ्गोत्तमाङ्गजानि प्रकीर्णानि॥" इति।

चाणक्यटीका

चतुर्विधं मौक्तिकं मणिं वज्रं प्रवालकञ्च क्रमेण दर्शयन्नाह—ताम्रेति। पाण्डयदेशे ताम्रपर्णिका नाम नदी समुद्रपतिता, तत्र भवं कोपधावर्णः ताम्रपर्णिकम्। पाण्डयानां यः कवाट इव पर्वतः तत्प्रभवासु नदीषु जातं पाण्ड्यकवाटम्। पाण्ड्यविषय एव समुद्रपार्श्वे पाशिकायां नद्यां भवं पाशिक्यम्। तथा कुला नामनदी तत्र भवं कौलेयम्। चूर्णानाम नदी केरलसमीपे तत्र भवं चौर्णेयम्। महेन्द्रोनाम पर्वतः समुद्रतटे तत्प्रभवासु नदोषु जातं माहेन्द्रम्। उत्तरापथे कर्दमिकायां नद्यां भवं कार्दमिकम्। स्रोतसी नदी पर्वते[१] तत्र भवं स्रौतसीयम्। तत्रैव ह्रदे भवं ह्रादीयम्। इति स्थानानि मौक्तिकस्य॥

तासु नदीषु याः शुक्तयो जायन्ते नदीसमुद्रे मेघशङ्खाः? तन्मुखप्रविष्टतज्जलमेव मुक्तात्वेन परिणमति। ऐन्द्रं जलमित्यन्ये। प्रकीर्णकञ्चेति मत्स्यसर्पहस्तिनां मस्तकानि अन्यानि वंशादीनीति तिस्रो योनयः॥

प्रतिपदपञ्चिका

साम्प्रतं सर्वरत्नप्रधानस्य मौक्तिकस्य दश क्षेत्राणि त्रिविधां च योनिं प्रतिपादयितुमाह—'ताम्रपर्णिकमित्यादि, तत्र ताम्रपर्णिकं पाण्ड्येदुयेषु ताम्रपर्ण्याख्या नदी, समुद्रसङ्गमसमुत्पन्नं, पाण्ड्यकवाटकं तत्रैव, मलयकोटिपर्वतोत्पन्नं चञ्चत्कोष्ठागारकोटिमाचक्षते। पाशिक्यं पाशनिकं नदीनं, कौलेयं सिंहलद्वीपे मयूरग्रामसमीपे कुला नाम नदी तदुत्पन्नम्। चौर्णेयम्, केरलेषु मुरचीपत्तनसमीपे चूर्णा नाम नदी तस्यां जातम्। माहेन्द्रं महेन्द्रगिरिसमीपे समुद्रोत्पन्नम्। कार्दमिकं, पारसीकेषु कर्दमा नाम नदी तदुत्पन्नम्, स्रौतसीयम् बर्बरकूले स्रौतसी नाम नदी तदुत्पन्नम्। ह्रादीयं बर्बरकुल

---

१. बर्बरकूल इति भट्टस्वामी।

**मसूरकं त्रिपुटकं कूर्मकं अर्धचन्द्रकं कञ्चुकितं यमकं कर्तकं खरकं सिक्थकं कामण्डलुकं श्यावं नीलं दुर्विद्धं चाप्रशस्तम् ।**

---

प्रतिपदपञ्चिका

एव समुद्रैकदेशे श्रीघण्टाभिधानो ह्रदः तदुत्पन्नम् । हैमवतं हिमवद्गिरिजम् । एवं देशक्षेत्राण्यभिधाय त्रिविधां योनिमाह शङ्खः शुक्तिः प्रकीर्णकं च योनय इति । तत्र शङ्खशुक्ती जलजौ प्राणिविशेषौ प्रतीतौ । प्रकीर्णकं गजमस्तकादिप्रभवम् । तथा च—

करका वारिधाराश्च मलयाश्चन्दनोदकम् ।
शङ्खशुक्तिनिपीतं यन्मौक्तिकं तत्प्रजायते ॥
वर्णच्छायाप्रमाणाद्यैरुपेतः कालयोगतः ।
विविधं तद्विजानीयात् परमार्थसमं क्रमात् ॥
सूकरमृगेन्द्रदंष्ट्रोद्भवानि[1] करिकुम्भजेषु जातानि ।
वंशाभोगभुजङ्गोत्तमाङ्गजानि प्रकीर्णकानि ॥

श्रीमूला

अथ मौक्तिकस्य त्रयोदश दोषानाह—मसूरकमिति । मसूरकं तदाख्यधान्यविशेषाकारं, त्रिपुटकं तदाख्यधान्याकारं, कूर्मकं तदाकारम्, अर्धचन्द्रकम् अर्धचन्द्राकृति, कञ्चुकितं पटलितं, यमकं युग्मकं, कर्तकं छिन्नकं, खरकम् अश्लक्ष्णं सिक्थकं सिक्थाकारबिन्दुयुक्तं, कामण्डलुकं कमण्डल्वाकारं, श्यावं कपिशवर्णं, नीलं नीलवर्णं, दुर्विद्धम् अस्थानविद्धम्, ईदृशं मौक्तिकम् अप्रशस्तम् । गुणात् प्राग् दोषवचनं दुष्टस्यात्यन्तानुपादेयत्वद्योतनार्थम् ।

चाणक्यटीका

मसूरसंस्थानं मसूरकम् । कलापसंस्थानं त्रिकोणं त्रिपुटकम् । कूर्मपृष्ठसंस्थानं कूर्मकम् । अर्धचन्द्रसंस्थानम् अर्धचन्द्रकम् । कमण्डलुसंस्थानं मध्ये विशालमुभयान्तयोस्तनु कामण्डलुकम् इति । खर ( का ) वसानं[2] स्थानदोषाः । श्यावं नीलमिति च वर्णदोषाः । दुर्विद्धम् अदेशविद्धम् इति संस्कारदोषाः ॥

प्रतिपदपञ्जिका

गुणवदुपादानायाप्रशस्तानां वर्जनीयतरत्वप्रतिपादनाय च प्रथमतरं त्रयोदशविधं दोषमाह—मसूरकमित्यादि । मसूरकं त्रिपुटकं कूर्मकार्धचन्द्रककामण्डलुकानि तदाकृतीनि । तत्र मसूरत्रिपुटौ धान्यविशेषौ, कूर्मः कच्छपः, अर्धचन्द्रः प्रतीतः कमण्डलुः

---

१. आकर ।—पा०

२. 'सारतरं मयालब्धम्–अखरकम्, अकर्करम्, अकञ्चुकम् अयमकम्, अकूर्मकम्, असिक्थकञ्च, मुक्ताजातमिदम्……निस्तल-स्थुल-वृत्त-स्निग्ध-भ्राजिष्णु-गुरु-श्वेत-देशविद्धान्यमूनि मौक्तिकानि' इत्यवन्तिसुन्दरी ।

**स्थूलं वृत्तं निस्तलं भ्राजिष्णु श्वेतं गुरु स्निग्धं देशविद्धं च प्रशस्तम ॥**

[ मौक्तिकसराणां पञ्चभेदाः, शोर्षकादिसङ्ख्यानुगुण्येन तेषां परस्परमिश्राणामि-
श्रणाभ्यां च व्यवहार्याणि भूषणनामानि ]

**शीर्षकं उपशोर्षकं प्रकाण्डं अवघाटकं तरलप्रतिबन्धं चेति यष्टिप्रभेदाः ।**

---

प्रतिपदपञ्चिका

यतीनामुदकपात्रं । कञ्चुकितं सपटलकं, यमकं युग्मकं, एकलग्नं कर्तकच्छिन्नम्, खरकं अस्निग्धम्, अश्लक्ष्णं वा सिक्तकं, बिन्दुचित्रं श्यावं कृष्णत्वानुगतं, सुस्थानमपि वर्णदोषात् दुष्टं नीलं नीलवर्णं दुर्विद्धम् अप्रदेशविद्धम् । सुस्थानवर्णापेतमपि वेधदोषात् तद्[1], दुष्टमेव ।

श्रीमूला

मौक्तिकस्याष्टौ गुणानाह—स्थूलमिति । स्थूलं पृथु, वृत्तं चारुपरिमण्डलं, निस्तलं तलरहितं मसृणं भूम्यनवस्थायि, भ्राजिष्णु दीप्तिमत्, श्वेतं धवलं, गुरु अलघु, स्निग्धम् अरूक्षं, देशविद्धं च यथास्थानविद्धं च, मौक्तिकं प्रशस्तम् । एषु यस्य कस्यचित् पूर्वोक्तदोषाभावरूपतया सिद्धस्यापीह शब्दतो ग्रहणं स्थूलत्वादिनिर्विशेषं गुणत्वं द्योतयितुम् ।

चाणक्यटीका

वृत्तं वर्तुलम् । निस्तलं स्वानतम् । अन्ये निस्तुलमिति पठन्ति एवं वृत्तमित्यनेनैव सिद्धत्वात् । भ्राजिष्णु प्रभास्वरम् । श्वेतं शुद्धवर्णम् । स्निन्धम् अपरुषम् । देशविद्धम् मध्यविद्धमुपयोगार्थम् ॥

प्रतिपदपञ्चिका

दोषानभिधायाऽष्टौ मौक्तिकगुणानाह—स्थूलमित्यादि, स्थूलं महत्, वृत्तं सुपरिमण्डलं, निस्तलं श्लक्ष्णायां भूमावन वस्थायि, पांसुनिका यदुपरिमुक्तं तलाभावान्नावतिष्ठते । भ्राजिष्णु द्युतिमत्, श्वेतमतिधवलं, गुरु भारिकम्, स्निग्धम् अरूक्षच्छायं, देशविद्धं यथोक्तदेशविद्धं न तुवृत्तस्निग्धदेशविद्धानां तद्विपरीतदोषवचनादर्थापत्या गुणत्वे सिद्धे तद्ग्रहणं नियमप्रतिषेधार्थम्, अन्यथा हि स्थूलनिस्तलभ्राजिष्णुगुरुश्वेतानामिव पञ्चानां नियमेन वचनसामर्थ्यात् गुणत्वं स्यादिति ।

श्रीमूला

अथ पञ्च यष्टिभेदानाह—शीर्षकमिति । मौक्तिकं महदेकं मध्ये, पार्श्वयोस्तु सर्वाणि तनूनि समानि यस्याः सा यष्टिः शीर्षकमित्युच्यते । उपशीर्षकं नाम महदेकं मौक्तिकं मध्ये, तत्पार्श्वयोस्तु सममल्पपरिमाणमेकैकमित्येवङ्क्रमेणानेकै-

---

१. तदा ।—पा०

**यष्टीनामष्टसहस्रमिन्द्रच्छन्दः। ततोऽर्धं विजयच्छन्दः। शतं देवच्छन्दः। चतुष्षष्टिरर्धहारः। चतुष्पञ्चाशद्रश्मिकलापः। द्वात्रिंशद्गुच्छः। सप्तविंशतिर्नक्षत्रमाला। चतुर्विंशतिरर्धगुच्छः। विंशतिर्माणवकः।**

---

श्रीमूला

स्त्रिकैः समैर्ग्रथिता यष्टिः। प्रधानमेकं मध्ये, तत्पार्श्वयोर्द्वे द्वे इत्येवङ्क्रमेणानेकैः पञ्चकैर्ग्रथिता यष्टिः प्रकाण्डकम्। प्रधानमेकं महन्मौक्तिकं मध्ये कृत्वा, पार्श्वयोः क्रमकृशोत्तरोत्तरमौक्तिकैर्ग्रथिता यष्टिरवघाटकाख्या। तरलप्रतिबन्धं नाम समप्रमाणमौक्तिकगुम्फिता यष्टिः। चशब्दः समुच्चये। इति यष्टिप्रभेदाः यष्टीनां सराणां प्रभेदाः।

चाणक्यटीका

रचनाविशेषमाह—शीर्षकमिति। शीर्षकशब्दः शिरःपार्श्वयोः द्रष्टव्यः। प्राधान्यसामान्यादुपचारेण महाप्रमाणयष्टिमध्ये मौक्तिकम्। तत्पार्श्वयोः किञ्चिदूनप्रमाणम् ( अवशिष्टकम् ? उपशीर्षकम् ) तयोर्बहिर्मध्यप्रमाणं प्रकाण्डकम्। तयोर्बहिर्न्यूनतरप्रमाणम् अवघाटकम्। तयोर्बहिर्न्यूनतरप्रमाणान्तरं (अ)नन्ते ( ? ) पश्चात् प्रतिबद्धं क्रियत इति तरलप्रतिबन्ध इत्युच्यते। यष्टिर्माला लतिका सरिकेत्यन ( र्था ) न्तरम्। तासां चारुरूपमुक्ताफलावस्थानार्थं प्रदेशावयवा गुटिकाः। सङ्ख्या त्वत्र उपयोगापेक्षया द्रष्टव्या। उपशीर्षकादयश्चत्वारः षड् वेति नायं नियमः। अन्यथा शीर्षकादिद्वययोगात् दशगुटिका यष्टिः स्यात्॥

प्रतिपदपञ्चिका

एवं दोषान् गुणांश्चाभिधाय सम्भवतः पञ्चयष्टिभेदानाह—शीर्षकमित्यादि, शीर्षकमेकं प्रधानं पञ्चमौक्तिकमध्ये प्रकाण्डकं, तथा प्रधानमेकं यस्याशेषाणि तु सर्वाणि तुल्यानि। ( उपशीर्षकं स ) साभ्रदानपञ्चमौक्तिकमध्यं प्रकाण्डकं, तथा प्रधानमेकंमज्ज(ध्व)मौक्तिकं मध्ये कृत्वा, तदनु किञ्चित् किञ्चित् अपचीयमानक्रमेण ग्रथितसमस्तमौक्तिकं गोपुच्छाकारकारकमवघाटकं, तथा तुल्यप्रमाणसमस्तमौक्तिकग्रथितं तरलप्रतिबन्धम्। चशब्दः समुच्चये। इतिशब्दः प्रकारे। यष्टिप्रभेदा लताभेदाः, यष्टीनामष्टसहस्रादिसङ्ख्यानियमेन इन्द्रच्छन्दादिसंज्ञादिकानि एकादश आभरणानि प्रत्येकं शीर्षादिप्रधानपाञ्चविध्यात् पञ्चांशा भवन्ति।

श्रीमूला

शीर्षक दीनां पञ्चानां यष्टीनां प्रत्येकं सङ्ख्यानियमप्रयुक्तानेकादशभेदानाह—यष्टीनामिति। यष्टीनां शीर्षकादिलक्षणानामुक्तानाम्, अष्टसहस्रम् अष्टोत्तरं सहस्रम्, इन्द्रच्छन्दः तदाख्यं भूषणमुच्यते, शीर्षकेन्द्रच्छन्द उपशीर्षकेन्द्रच्छन्द इत्यादिप्रकारैर्व्यपदिश्यत इत्यर्थः। एवमुत्तरत्रापि बोद्धव्यम्। ततोऽर्धं चतुरुत्तरा पञ्चशती, विजयच्छन्दः। शतं देवच्छन्दः, शतयष्टिकं देवच्छन्दाख्यम्। एकाशीत्युत्तरैर्यष्टीनामष्टभिः शतैर्युक्तो देवच्छन्द इति क्वचिद् व्याख्यातम्। चतुष्षष्टिरित्यादिकम्।

**ततोऽर्धमर्धमाणवकः । एत एव मणिमध्यास्तन्माणवका भवन्ति । एकशीर्षकश्शुद्धो हारः । तद्वच्छेषाः । मणिमध्योऽर्धमाणवकः त्रिफलकः फलकहारः पञ्चफलको वा । सूत्रमेकावली शुद्धा । सैव मणिमध्या यष्टिः ।**

---

### चाणक्यटीका

यष्टीनामिति यथोक्तावयवानाम् अष्टाधिकं सहस्रमिन्द्रच्छन्दसंज्ञको दे ( वल ? वालय ) वितानादिषु शोभाकरणार्थमवलम्ब्यते । ततोऽर्धं विजयच्छन्द इति शतार्द्धम् । एत एवेति एकादशाप्येते यन्मणिमध्या भवन्ति तैर्विशेषणीयास्तन्माणवकास्तदात्मान इत्यर्थः । तद्यथा पद्मरागेन्द्रच्छन्दः इत्यादयो योज्याः । एकशीर्षक इति एकप्रमाणाः शीर्षका एव यस्य गृह्यन्ते स शुद्धो हारः । कतिपययष्ट्य इति चेन्माणवकानन्तर्याद् विंशतिरिति गम्यते । विशेषानभिधानादेकयष्टिरित्यन्ये तद्वच्छेषं शुद्धोपशीर्षकं शुद्धप्रकाण्डकमित्यादियोज्यम् ।

### प्रतिपदपञ्चिका

तान्याह—यष्टीनामष्टसहस्रमित्यादि, यष्टीनां लतानां अष्टोत्तरसहस्रमिन्द्रच्छन्द इत्येवंसंज्ञं भवति । शेषं सुबोधम् । त एवेति, पूर्वोक्ता एवेन्द्रच्छन्दादयो मणिमध्याः तन्माणवका इति । इन्द्रच्छन्दाद्युपपदमाणवकसंज्ञा भवन्ति । तत्र एकशीर्षकःशुद्धो हार इति एकशब्दः केवलवाची, केवलाभिशीर्षकलक्षणाभिरुपशीर्षकादिरहिताभिर्यष्टिभिः

### श्रीमूला

अर्धमाणवक इत्येवमान्तमुत्तानार्थम् । एत एवेति । उक्ता एवेन्द्रच्छन्दादयो, मणिमध्या माणिक्यमध्याः सन्तः, तन्माणवका भवन्ति, इन्द्रच्छन्दाद्युपपदमाणवकाः भवन्ति, इन्द्रच्छन्दमाणवको विजयच्छन्दमाणवक इत्येवमादिसंज्ञायुक्ता भवन्तीत्यर्थः । एकेत्यादि । एकशीर्षकः शुद्धो हारः एकानि केवलान्युपशीर्षकादिलक्षणास्पृष्टानि शीर्षकाणि शीर्षकाख्याः यथोक्तसङ्ख्या यष्टयो यस्य स तथाभूतः, अर्थाद् इन्द्रच्छन्दादिर्विशेष्य शुद्धहाराख्यो भवति, इन्द्रच्छन्दशीर्षकशुद्धहारो विजयच्छन्दशीर्षकशुद्धहारो देवच्छन्दशीर्षकशुद्धहारोऽर्धहारशीर्षकशुद्धहारो रश्मिकलापशीर्षकशुद्धहार इत्यादिरीत्या व्यवहार्यो भवतीत्यर्थः । शीर्षकविषयेऽभिहितं शुद्धहारव्यपदेशमुपशीर्षकादावतिदिशति—तद्वदिति । तद्वद् शीर्षकवत्, शेषा उपशीर्षकादयः, बोद्धव्या इति शेषः । एतदुक्तं भवति—एकशीर्षकवद् एकोपशीर्षक एकप्रकाण्डक एकावघाटक एकतरलप्रतिबन्ध इत्यपरे चत्वारः शुद्धहाराः । इन्द्रच्छन्दे पशीर्षकशुद्धहारो विजयच्छन्दोपशीर्षकशुद्धहार इत्यादिक्रमेण प्रत्येकमुपगृहीतेन्द्रच्छन्दविजयच्छन्दादिसंज्ञाका ऊहनीया इति । मणिमध्य इति । मणिर्मरतकादिर्मध्ये यस्य स मणिमध्यः, अर्धमाणवकः पूर्वोक्तो दशयष्टिः, त्रिफलकः पञ्चफलको वा त्रिभिः पञ्चभिर्वा स्वर्णफलकैर्युक्तो भवन्, फलकहारः फलकहारसंज्ञो भवति, स च द्विप्रकारः । सूत्रमिति । शुद्धा मणिहीना, एकावली एकः सरः शीर्षकाद्यन्यतमलक्षणः, सूत्रं तदाख्या भवति ।

**हेममणिचित्रा रत्नावली । हेममणिमुक्तान्तरोऽपवर्तकः । सुवर्णसूत्रान्तरं सोपानकम् । मणिमध्यं वा मणिसोपानकम् ।**

---

चाणक्यटीका

मणिमध्य इति दशयष्टिरर्द्धमाणवको मणिमध्यः, ( स ) त्रिभिः सुवर्णफलकैः पञ्चभिर्वा मणिरचितैः सान्तरालो ग्रथितः फलकहारसंज्ञो भवति सूत्रमिव, एकैव मुक्तामालादीनां पञ्चावयवानामेकजातीयावयवानां वा । सैव मणिमध्या एकावली यष्टिः । हेम्ना मणिभिश्च क्वचित् क्वचित् चित्रा रत्नावली ॥

प्रतिपदपञ्चिका

निबद्धसङ्ख्याप्रभेदविहितसंज्ञोपपदश्च शुद्धहारसंज्ञो भवति । तद्यथेन्द्रच्छन्दशीर्षकः-शुद्धहार इत्यादि । तद्वदेकशीर्षवत् । शेषाश्चोपशीर्षकप्रकाण्डकादयः स्वसंज्ञोपपदशुद्ध-हारा व्याख्येयाः । ये त्वत्र मानुषाणां, अनुचितास्ते देवतानामवगन्तव्याः । मणिमध्योर्ध्व-माणवक इति । मणिमध्यः पद्मरागादिमणियुक्तोऽर्धमाणवकः । प्रागभिहितो दशयष्टिः स एव त्रिभिः फलकैः सौवर्णफलकैः पञ्चभिर्वा पद्मरागाद्युपलाश्रयभूतैरुपेतः फलकहार-संज्ञो भवति । सूत्रमेकावलिरिति, ( रिवर्णो वर्जनोयः । ) एका अद्वितीया, आवली

श्रीमूला

सैवेति । सैव एकावल्येव, मणिमध्या सती, यष्टिः यष्टिसंज्ञा । हेमेत्यादि हेममणिचित्रा हेममयैर्मणिभिराहितवैचित्र्या यष्टिः, रत्नावली तदाख्या । हेममणिमुक्तेत्यादि । हेममणिमुक्तान्तरः हेममणिमुक्ताः पूर्वं हेमगुलिका, ततः पद्मरागादिरत्नं, ततो मौक्तिकमित्येवङ्क्रमगुम्फिताः अन्तरे मध्ये यस्य स तथाभूतः, अपवर्तकः तदाख्यः । सुवर्णेत्यादि । सुवर्णसूत्रान्तरं सुवर्णसूत्रम् अप्रत्युप्तमणिकं केवलस्वर्णफलकम्, अन्तरे मध्ये यस्य तत् तथाभूतं, सोपानकं तत्संज्ञम् । मणीत्यादि । मणिमध्यं मणिसोपानकं । मणियुक्तं प्रत्युप्तमणिकं मध्यं मध्यसुवर्णफलकं यस्य तत् तथाभूतं मणिसोपानकाख्यम् ।

चाणक्यटीका

अपरे त्वाहुः—सूत्रवत्, सूत्रम् एकावलीत्युच्यते, विशुद्धा मणिभिः फलकैश्चा-संसृष्टत्वात् । यदा मणिमध्या सैव एकावली, तदा यष्टिरिति । हेममणिगुटिकाभि-र्विकलीकृत्य युक्ता रत्नावली ॥

हेममणिमुक्ता ( न्तरित ) इति । हेममणय एव एकैकमुक्तान्तरिता ( यत्र ) । तद्यथा—पूर्वं मुक्ता ततो हेमगुटिका ततो मणिः पुनर्मुक्तेत्यपवर्तकसंज्ञः । सुवर्णसूत्रान्त-रितमिति सुवर्णसूत्रेणैकेनान्तरितं मौक्तिकं यत्र तत् सुवर्णसोपानकम् । तदेव तन्मणि-मध्यं मणिसोपानकम् । मणिविशेष ( णा ? ) विशेषेणोयं वैडूर्यसोपानकमित्यादि ॥

( तेनेति ? ) तेषां ये युक्त ( ? ) प्रमाणा माणवकाः ते ग्रीवासक्ताः प्रालम्बा-दयः, ( कृपण ? कण्ठ ) शरीरभूषणास्तदायामाः । महाप्रमाणाश्चेन्द्रच्छन्दादयो देवशय्यागृहादिभूषणानि ॥

२२

तेन शिरोहस्तपादकटीकलापजालकविकल्पाः व्याख्याताः ॥

---

प्रतिपदपञ्चिका

लताः शुद्धमणिरहिताः शीर्षकादिपञ्चप्रभेदा विसूत्रसंज्ञा भवन्ति । सैवेति, पूर्वोक्तैकावली मणिमध्या मणियुक्तमध्या यष्टिसंज्ञा भवति । हेममणिचित्रेति, यष्टिरिति हेममणिभिश्च-चित्रा यष्टिः रत्नावली भवति । हेममणिमुक्तान्तर इति, मुक्ताप्रमाणः पूर्वः सौवर्णो[1] मणिः, ततः पद्मरागादिमणिः ततो मौक्तिक इत्येवमन्तर एवंग्रथितमध्योऽपवर्तकसंज्ञो भवति इति । त्रिफलकं पञ्चफलको वेत्यत्र फलकं वा युक्तमुक्तम् । तद्द्विविधम् केवलसुवर्णं मणिरहितं च तदाह—सुवर्णसूत्रान्तरमित्यादि ।

सुवर्णमेव केवलं पत्रभङ्गादिपरिकर्मवति । सूत्रान्तरमिति मध्ये निबन्धनसूत्र-प्रदेशे यद्विहितं रन्ध्रं सूत्रबिन्धनार्थं विहितोभयपार्श्वपाशकं वा । तथा च सति समास-द्वयं भवति । सूत्रमन्तरे मध्ये यस्य सूत्रयो र्वा अन्तरं सुवर्णं च तत् सूत्रान्तरं च सुवर्ण-सूत्रान्तरं सोपानकं भवति । मणिमध्यं मणिसोपानकं भवति ।

श्रीमूला

तेनेति । तेन यथोक्तेन शीर्षकादिकण्ठाभरणप्रकारेण, शिरोहस्तपादकटीकला-पजालकविकल्पाः शिरआदिचतुष्टयस्य कलापजालकविकल्पाः कलापः सरः जालकं सरसमूहः तयोर्विकल्पाः—प्रकाराः व्याख्याताः उक्तप्राया इत्यर्थः । अत्रायं सङ्ग्रह-श्लोकः श्रीभट्टस्वामिनः—

"अष्टौ गुणास्त्रिधा योनिर्दश सम्पत्तिभूमयः ।
त्रयोदशैव मुक्तानां दोषा हाराश्च विंशतिः ॥"

इति मौक्तिकप्रकरणम् ।

चाणक्यटीका

इदानीं मस्तकादिभूषणविधानार्थमाह—तेन शीर्षकादिन्यासक्रमेण शिरो-हस्तादिभूषणार्थाः कलापविकल्पाः जालविकल्पाश्चानुप्रधानाः शुद्धा मणिमध्या च व्याख्याताः । मौक्तिक ( करणं ? रत्नं ) व्याख्यातम् ।

प्रतिपदपञ्चिका

तेनेति, पूर्वोक्तेन शीर्षकाद्यकण्ठाभरणप्रकारेण शिरःप्रभृतीनां कलापजालकवि-कल्पान्याभरणान्याख्याताः । कलापो लता जालकं, तत्समूहः । विकल्पः तत्प्रभेद इति केचित् । अपरे तु कलापो लतासमूहः—जालकं फलकं, विकल्पः प्रकार इति ।

तथा च अष्टौ गुणाः—त्रिधा योनिः दश[2] सम्पत्तिभूमयः ।
त्रयोदशैव मुक्तानां दोषा हाराश्च विंशतिः ।

---

१. स्नेहवर्णो—पा०

२. दल—पा०

[ मणीनां त्रिधा विभागः ]

**मणिः—कौटो मालेयकः पारसमुद्रकश्च ।**

[ मणिपु पञ्च माणिक्यभेदाः ]

**सौगन्धिकः, पद्मरागः' अनवद्यरागः, पारिजातपुष्पकः, बालसूर्यकः ।**

---

श्रीमूला

अथ मणीनां गुणादीन् वक्तुमुपक्रमते—मणिरिति । मणिः, कौटः कोटिमंलय-सागरान्तरं तत्रभवः, मलयैकदेशः कर्णीवनाख्यो माला तस्यां जातो मालेयकः, पारसमुद्रः सिंहलद्वीपस्थो रोहणाद्रिः, तज्जः पारसमुद्रकः, इति त्रिविध इत्यर्थः । एवं च मणीनां योनयस्तिस्र इत्युक्तं भवति । प्रायिकं चैतत् स्फटिकवैदूर्यमरतकादीनां विन्ध्यविदूरदर्दुरादिषूत्पत्तिदर्शनादित्याहुः । श्लोकं चोदाहरन्ति—

"विन्ध्यो विदूरशैलो मलयो विन्ध्योपलक्षणोद्देशः ।
स्त्रीराज्यं चेति पुनस्तस्याकरभूमयोऽभिहिताः ।। इति ।

मणिपु पञ्चप्रकारां माणिक्यजातिमाह—सौगन्धिक इति । सौगन्धिकः तदाख्यकुसुमवद् ईषन्नैल्यरूषितरक्तवर्णः, पद्मरागः पद्मवर्णः, अनवद्यरागः अनवद्यं कुङ्कुमं तद्वर्णः, पारिजातपुष्पकः पारिजातकुसुमवर्णः, बालसूर्यकः उदीयमान-सूर्यारुणः ।

चाणक्यटीका

मणिरत्नमाह—मणिरिति । कूटाख्ये पर्वते मलयपर्वते च भवः कौटः, मालेयः प्रालेयवत् "केकयुमित्रयुप्रलयानां यादेरियः" ( ७. ३. २. ) इत्यत्रोपसङ्ख्येयः, पृषोदरा-दिषु वा द्रष्टव्यः । समुद्रपारे भवः पारेसमुद्रकः सिंहलद्वीपज इत्यर्थ । त्रिविध आकरः ॥

( रात्रि ? रत्न ) भेदान् सवर्णविशेषानाह—सौगन्धिकपुष्पवर्णः सौगन्धिकः । रक्तपद्मस्येवानवद्यरागः पद्मरागः । पारिजातपुष्पसदृशोऽतिलोहितो बालसूर्यक इति ( यः ? ) पद्मरागभेदाः ॥

प्रतिपदपञ्चिका

एवं मौक्तिकानां क्षेत्रगुणादीनभिधाय मणीनामाह—मणिरित्यादि ।

तत्र त्रिविधं क्षेत्रं कौटमालेयकपारससमुद्रकाख्यञ्च । तथा च :—

'अनुवेलं मलयगिरि सिंहलभूमौ च रोहणो देशः ।
कर्णिवनं च तेषां उत्पत्तेर्योनयस्तिस्रः ।।' इति ।

प्रायिकं चैतदन्यत्रापि माणिक्यापर्यायाणां स्फटिकवैडूर्यमरकतानां विन्ध्यविदूर दर्दुरमलयादिषूत्पत्तिदर्शनाद । उक्तं हि :—

'विन्ध्यो विदूरशैलो मलयो विन्ध्योपलक्षणोद्देशः ।
स्त्रीराज्यं चेति पुनः तस्याकरभूमयोऽभिहिताः ।।' इति

[ अष्टौ वैडूर्यभेदाः ]

**वैडूर्यः—उत्पलवर्णः शिरीषपुष्पकः उदकवर्णः वंशरागः शुकपत्रवर्णः पुष्परागो गोमूत्रको गोमेदकः ।**

[ अष्टौ इन्द्रनीलभेदाः ]

**नीलावलीयः इन्द्रनीलः कलायपुष्पकः महानीलः जाम्बवाभः जीमूतप्रभः नन्दकः स्रवन्मध्यः ।**

---

प्रतिपदपञ्चिका

तथा सौगन्धिकादिसूर्यकान्तान्तपञ्चविंशतिभेदा जात्यमणिजातिः । तत्र सौगन्धिप(वद्य)झरागानवद्यरागपारिजातपुष्पकबालसूर्यकभेदात् पञ्चप्रकारामाणिक्यजातिः । तथा च— शशरुधिरजपावन्धूकसन्निभाः पारिजातपुष्पाभाः—
तरुणतरणित्विषोवा त एव खलु पद्मरागाः स्युः ।

श्रीमूला

अष्टप्रकारां वैडूर्यजातिमाह—वैडूर्य इति । वैडूर्य इत्यधिकारः । उत्पलवर्णः कोकनदवर्णः, शिरीषपुष्पकः शिरीषपुष्पवर्णः, उदकवर्णः उदकवत् स्वच्छवर्णः, वंशरागः वेणुपत्रवर्णः, शुकपत्रवर्णः शुकपक्षच्छविः, पुर्ष्परागो हरिद्रापिञ्जर इति स्वामी, गोमूत्रकः गोमूत्रच्छायः, गोमेदकः गोमेदो गोरोचना तद्वर्णः ।

अष्टविधामिन्द्रनीलजातिमाह—नीलेत्यादि । नीलावलीयः शुक्लः एव नीलराजितरङ्गितः, इन्द्रनीलः मयूरबर्हवर्णः, कलायपुष्पकः कलायो धान्यभेदः तत्पुष्पसमच्छविः, महानीलः भ्रमरवर्णः, जाम्बवाभः जम्बूफलवर्णः, जीमूतप्रभः मेघवर्णः, नन्दकः अन्तःशुक्लो बहिर्नीलः, स्रवन्मध्यः स्रवज्जलाकाररश्मिप्रसरः ।

चाणक्यटीका

उत्पलवर्णो नीलोत्पलवर्णो नीलः । शिरीशपुष्ककः शिरोषपुष्पवर्णः । उदकवर्णः उदकाभः । वंशरागः वंशत्वगिव हरितः । पत्रवर्णः पत्रवद्धरितः । वंशोऽत्यर्थं हरितः, न तथा पत्रमिति भेदः । एते वैडूर्यभेदाः ॥

गोमुत्रको गोमेदकश्च नाम्नैव प्रतीतवर्णौ । शुद्धस्फटिको व्यक्तवर्णः । मूला ( दि ? टी ) वर्णः ( मृणालीपर्ण ? ) स्निग्धः श्वेत इत्यर्थः । अथवा मूलादिर्मूलक, तत्सदृशवर्णः । एते पुष्परागभेदाः ॥

नीलावलीयकः भ्रमरवर्णः । कलायपुष्पकः, कलायपुष्पवर्णः । एताविन्द्रनोलभेदौ ॥

जाम्बवाभो जम्बूफलवर्णः । जीभूतप्रभः कालमेघवर्णः । इति महानीलभेदौ ॥

नन्दकः अवस्थानादेव द्रव्याणां वृद्धिकरः । चन्द्रकान्तः स द्विविधः—स्रवन्मध्यः यश्चद्रकिरणसंस्प ( र्शः ? र्शात् ) स्रवति मध्यात् ।

[ चत्वारः स्फटिकभेदाः ]

**शुद्धस्फटिकः मूलाटवर्णः शीतवृष्टिः सूर्यकान्तश्चेति मणयः ।**

प्रतिपदपञ्चिका

एवमुत्पलवर्णः शिरीषपुष्पकोदकवर्णवंशरागशुकवक्त्राभ्रवर्णपुष्परागगोमूत्रकगोमेदकप्रभेदा दृष्टप्रकारा वैडूर्यजातिः ।

शुकबर्हवारि सैन्धवशिरीषकुसुमप्रभं वीताभम्[1] ।
मार्जारनयननैल्यं वंशच्छदकान्ति वैडूर्यम् ॥ इति ।

तथा इन्द्रनील-नीलावलीय-कलायपुष्पक-महानीलजाम्ब्वाभजीभूतप्रभनन्दक-स्रवन्मध्यभेदादष्टधैव इन्द्रनीलजातिः । तथा च—

बर्हिणचन्द्रवर्णभ्रमराभाः पक्वजंब्वाभाः ।
सूर्यांशुतापयोगात् कृच्छालोका महानीलाः ॥
मन्दरमथनायासितवासुकिजविषोद्भवा मरकतस्य ।
प्रथमोत्पत्तिः केचिदुरगाण्डजाति जगुः ।
गरुडच्छदप्रकाशं कदलीदलवंशपत्रवर्णं वा ॥
परिपक्वकलमकणिशानुकारि वा मरतकं गदितम् ॥

श्रीमूला

चतुर्विधां स्फटिकजातिमाह—शुद्धेत्यादि । शुद्धस्फटिकः अत्यन्तशुक्लः, मूलाटवर्णः उद्धृतस्नेहदधिच्छायः, शीतवृष्टिः चन्द्रकान्तः यश्चन्द्रकिरणस्पर्शे द्रवति । सूर्यकान्तः यः सूर्यकरसम्पर्केऽग्निं वमति । चशब्दः समुच्चये । इति मणयः मणिभेदाः ।

आर्याश्चात्राचार्यैरुदाहृताः—

"शशरुधिरजपाबन्धूकसन्निभाः पारिजातपुष्पाभाः ।
तरुणतरणित्विषो वा त एव खलु पद्मरागाः स्युः ॥
शुकबर्हवारिसैन्धवशिरीषकुसुमप्रभं हरिद्राभम् ।
मार्जारनयननैल्यं वशांच्छदकान्ति वैदूर्यम् ॥
बर्हिणचन्द्रकवर्णा भ्रमराभाः पक्वजम्ब्वाभाः ।
सूर्यांशुतापयोगात् कृच्छालोका महानीलाः ॥
मन्दरमथनायासितवासुकिजविषोद्भवा मरतकस्य ।
प्रथमोत्पत्तिः कथिता केचिद् भुजगाण्डजेति जगुः ॥
गरुडच्छदप्रकाशं कदलीदलवंशपत्रवर्णं वा ।
परिपक्वकलमकणिशानुकारि वा मरतकं गदितम् ॥" इति ।

१. पीता ।—पा०

### श्रीमूला

केचित् पुनः सौगन्धिकशब्दस्य माणिक्यपर्यायतां वदन्तः सौगन्धिक इति वैदूर्याधिकारवद् माणिक्याधिकारस्तस्य प्रभेदाः पद्मरागादयश्चत्वार इति, उत्पलवर्णादयो नीलावलीयान्ता वैदूर्यस्य नव प्रभेदा इति। इन्द्रनील इत्यधिकारः कलायपुष्यकादयः स्रवम्मध्यान्तास्तस्य षट् प्रभेदा इति, शुद्धस्फटिकादयश्चत्वारः स्फटिकप्रभेदा इति च व्याचक्षत इत्याह स्वामी।

### चाणक्यटीका

यः स्रवः स्रवन्नपि शीतं जनयति स शीतवृष्टिः। यः सूर्यकिरणसंस्पर्शाद् अग्नि मुच्चति स सूर्यकान्तः। इति मणिभेदाः॥

### प्रतिपदपञ्चिका

एवं शुद्धस्फटिकमूलादिवर्णशीतवृष्टिसूर्यकान्तभेदाच्चतुर्धा स्फटिकजातिरिति केचित्। अपरे तु सौगन्धिक इति माणिक्यजातिपर्यायमाचक्षाणाः तं लक्षीकृत्य पद्मरागानवद्यरागपारिजातपुष्पबालसूर्यकभेदाच्चतुर्विधां माणिक्यजातिं ब्रुवते। तथा नीलावलीयं वैडूर्यजात्यन्तर्गतं व्याचक्षाणा नव प्रभेदां वैडूर्यजातिं ब्रुवते। तथेन्द्रनीलमपि तज्जातीयपर्यायमावेदयन्तः कलायपुष्पकादिस्रावन्मध्यान्ताः षड्विधेन्द्रनीलेजातिरिति। स्फटिकस्तु तेषामपि चतुर्विध एव। त्रयोविंशतिस्समस्ता जात्यमणिजातिरिति। तत्र मलयसमुद्रान्तरं कोटिः। तत्रभवः कौटः। मलयस्यैवैकदेशः कर्णिवनमिति प्रतीतो माला, तस्यां भवो मालेयः। परसमुद्रेःसिंहलद्वीपे रोहणाभिधानः, तत्र भवः पारसमुद्रकः सौगन्धिको रक्तवर्णो मनाङ्नीलवर्ण इति केचित्।

अन्ये तु सौगन्धिक इति माणिक्यजात्यधिकारान्तस्य व्याख्या। पद्मानवद्यरागादि रागशब्दः प्रत्येकं पद्मं प्रतीतम्। अनवद्यं कुङ्कुमम्, पारिजातपुष्पकः पारिभद्रपुष्पवर्णः, बालसूर्यकः अर्धोदितदिनकरारुणः। वैडूर्य इत्यधिकारः। उत्पलवर्णो रक्तोत्पलच्छविः, शिरीषपुष्पवर्णकम् उदकवर्णः वैमल्यादपि भावितवर्णः वंशरागो वंशपत्रवर्णः, शुकपत्रवर्णः शुकपिंछाभः, पुष्परागो हरिद्रापिञ्जरः। गोमूत्रको गोमूत्रवर्णः गोमेदको रोचनरुचिः। नीलावलीयोऽत्यन्तनीलभ्रमराभ इति केचित्।

अन्ये तु शुक्लस्तरङ्गाकारनीलावली(य)बहुश इति इन्द्रनीलश्शिखिपिच्छकनिभः। अपरे तु कलायपुष्पकादीनां जातिवाचकमधिकारमाचक्षते। कलायपुष्पकः कलायाख्यधान्यविशेषकुसुमाकारः। महानीलः भ्रमराभः। जाम्ब्वाभः पक्वजंबूजीमूतप्रभो मेघवर्णः, नन्दकोऽन्तः शुक्लो बहिर्नीलः। स्रवन्मध्यः स्यन्दमानोदकाकारकिरणः।

शुद्धस्फटिकः नीलान्तःशुक्लः, मूलाटिवर्णः उद्धृतस्नेहदधिवर्णः शीतवृष्टिश्चन्द्रकन्तिः, सूर्यकान्तः सूर्यमणिरिति।

[ मणिगुणानां एकादशानां निरूपणम् ]

**षडश्रः चतुरश्रः वृत्तो वा, तीव्ररागः संस्थानवान् अच्छः स्निग्धः गुरुः अर्चिष्मान् अन्तर्गतप्रभः प्रभानुलेपी चेति मणिगुणाः ।**

[ सप्त मणिदोषाः ]

**मन्दरागप्रभः सशर्करः पुष्पछिद्रः खण्डो दुर्विद्धो लेखाकीर्णः इति दोषाः ।**

---

श्रीमूला

अथैकादश मणिगुणानाह—षडश्र इति । षडश्रः षट्कोटिः, चतुरश्रश्चतुष्कोटिः, वृत्तः चारुपरिमण्डलः, तीव्ररागः अत्यन्तभास्वरः, संस्थानवान् भूषणप्रतिवापयोग्यावयवसन्निवेशः, अच्छः निर्मलः, स्निग्धः मसृणः, गुरुः भारवान्, अर्चिष्मान् दीप्तिमान्, अन्तर्गतप्रभः मध्यभागेऽपि प्रभातरलः, प्रभया स्वीयया सन्निकृष्टमनुलिम्पतीति प्रभानुलेपी, चेति समुच्चये ।

सप्त मणिदोषानाह—मन्देत्यादि । मन्दरागप्रभः मन्दरागो वर्णरहितः मन्दप्रभो द्युतिहीनः, सशर्करः पुलकितः, पुष्पच्छिद्रः बिन्दुगर्भः, खण्डः दीर्णः, दुर्विद्धः अस्थानविद्धः, लेखाकीर्णः राजियुक्तः, इति दोषाः । अत्र भट्टस्वामिना बार्हस्पत्यौ द्वौ श्लोकावुदाहृतौ—

"पुष्पच्छिद्रोऽथ दुर्विद्धः शर्करानुगतस्तथा ।
मन्दरागप्रभश्चैव जातिभेदाः प्रकीर्तिताः ।।
प्रान्तश्च वामवृत्तश्च वलितास्यः(क)शान्वितः ।
कूष्णिकश्च विशीर्णश्च न हि शास्त्रे प्रशस्यते ।।" इति ।

चाणक्यटीका

तीव्ररागः उज्ज्वलवर्णः । संस्थानवान् अवक्रादिसंस्थानः नार्बुदमिव[1] कस्मिंश्चित् पार्श्वे निर्गत ( म ? ) स्थानः । अ ( न्त ? च्छः ) अकलुषः । स्निग्धः अपरुषः । अन्तर्गतप्रभः यस्यान्तर्गतं प्रतिविम्बमिव दृश्यते । प्रभानुलेपी प्रभासंसक्तं द्रव्यान्तरं वा अवलिम्पति ! इति साधारणा मणिगुणाः ।।

सशकरः सपाषाणः । पुष्पच्छिद्रः पुष्पाकारैः छिद्रैः युक्तः घुणजग्धाकार इत्यर्थः । ( लेखाकीर्णः ) लेखाकीर्णः राजिभिः व्याप्तः । इति साधारणा दोषाः ।।

प्रतिपदपञ्चिका

सम्प्रत्येकादशमणिगुणानाह—षडश्र इत्यादि, षडश्रः षट्कोटिः, तद्वच्चतुरस्रः वृत्तं प्रतीतम् तीव्ररागोऽतिभास्वरः, संस्थानवानाभरणयोजनयोग्यः संस्थानः, अच्छः अतिनिर्मलः, स्निग्धः स्पर्शसुखः गुरुकः भूरिकः[2] । अर्चिष्मान् श्रीमान्, अन्तर्गतप्रभः मध्येऽप्यतिभास्वरप्रभः । भिद्यमानोऽप्यभिन्नच्छाय इत्यपरे । प्रभानुलेपी स्वतेजोरञ्जितापाश्रयः[3] ।

---

१. अर्बुदोऽस्त्रियां मांसकीलाहवे रोगभेदे इति केशवस्वामी ।

२. भारिकः—पा० । ३. स्वत्तेजसा—पा०

[ वर्णभेदेन भिन्नाः अष्टादश मणिभेदाः अति-
रिक्तानां अप्रशस्तत्वं च ]

**विमलकः सस्यकः अञ्जनमूलकः पित्तकः सुलभकः लोहितकः अमृतांशुकः ज्योतीरसकः मैलेयकः आहिच्छत्रकः कूर्पः प्रतिकूर्पः सुगन्धिकूर्पः क्षीरपकः शुक्तिचूर्णकः शिलाप्रवालकः पुलकः शुक्रपुलकः इत्यन्तरजातयः। शेषाः काचमणयः॥**

---

श्रीमूला

अथावान्तरजातिमणीनाह—विमलक इति। विमलकः श्वेतहरितः, सस्यको नीलः अञ्जनमूलकः नीलश्यामः, पित्तको गोपित्तवर्णः, सुलभकः शुक्लः, लोहिताक्षः पर्यन्तरक्तः कृष्णमध्यः, मृगाश्मकः सितासितः ज्योतीरसकः शुक्ललोहितः, मैलेयकः हिङ्गुलकच्छायः, आहिच्छत्रकः मन्दरागः, कूर्पः शर्करिलः, प्रतिकूर्पः सिक्थकरुचिः, सुगन्धिकूर्पः मुद्गवर्णः, क्षीरपको दुग्धवर्णः, शुक्तिचूर्णको नेकवर्णः, शिलाप्रवालकः प्रवालवर्णः, पुलकः कृष्णगर्भः, शुक्रपुलकः शुक्लगर्भः, इत्यन्तरजातयः अनेन प्रकारेणाष्टादशावान्तरजातिमणयो वोद्धव्याः। त एते प्रशस्ताः।

अप्रशस्तानाह—शेषा इति। शेषाः उक्तेभ्योऽन्ये, काचमणयः अधममणयः। अत्र सङ्ग्रहश्लोकं पठन्ति—

"पञ्चविंशतिभेदानां गुणास्त्वेकादश स्मृताः।
सप्त दोषा मणीनां तु दशाष्टौ च विजातयः॥" इति।

चाणक्यटीका

विमलको विमलाञ्जनवर्णः। नालिकेरसवर्णः सस्य[1] (ज ? कः)। अञ्जनपर्वतजो मूलदेशे नीलः उपरिष्टाच्च शुक्लः अञ्जननीलकः। पित्तवर्णः पित्तकः। सुलभकः शुद्धस्फटिकः। लोहिताक्षः सुलभः इति रक्तवर्णः। मृताश्मको[2] घनप्रलेपवर्णः। ज्योतीरसकः कोण्डावत्याप्रदेशभवः। मलयपर्वतभवो मालेयकः। कोण्डावत्या एकदेशभवः आहिच्छत्रकः। कूर्पः सैन्धववर्णः। प्रतिकूर्पस्तद्वर्ण इव। सुकुमारस्तु सुगन्धिकूर्पः सुगन्धिपाषाणाकृतिवर्णः। क्षीरवकः क्षीरवर्णः। हस्तिचूर्णको हस्तिछव्याकारः। शिलाप्रवालको रक्तवर्णः। पुलको (रुञ्ज ?) अञ्जनक्षौद्रवर्णः। शुक्लपुलकः शुक्लः एते पूर्वेभ्यो न्यूनत्वात् काचमणिभ्यश्चोत्कृष्टत्वाद् अन्तरजातयो मध्यगुणा इत्यर्थः॥

---

१. सस्येन परिजातः सस्यको मणिः आकार शुद्धः इति काशिका।

२. अमृताश्मक इति स्यात् अनोश्मायम् (५।५।९४) इति सूत्रे अमृनाश्मोत काशिका। अमृतांशुक इति महिशूरमुद्रितपाठः। मृगाश्मकः पा०

[ वज्रमणेः आकरप्रदेशाः उत्पत्ति-
स्थानानि च ]

**सभाराष्ट्रकं मध्यमराष्ट्रकं काश्मक(स्तीर)राष्ट्रकं श्रीकटनकं मणिमन्तकं**

---

चाणक्यटीका

( शेषाः ) काचमणय इति यथोक्त मणिरागप्रभानुकारिण इत्यर्थः। अन्यस्त्वाह–मणिरागाश्ममणय इति। काचशब्दोऽपिमाया ( या ) मपि दृष्टः "शरावमग्निष्ठमिति काचमिति" ( अधि० २. अध्या० १४ )॥

प्रतिपदपञ्चिका

एवं गुणानभिधाय सप्त मणिदोषानाह—मन्दरागप्रभ इत्यादि।

मन्दशब्दः प्रत्येकम्, मन्दरागो वर्णरहितः, मन्दप्रभो द्युतिरहितः, सशर्करः पुलकितः, पुष्पच्छिद्रो बिन्दुच्छिद्रः। अन्ये तु पुष्पच्छिद्र इति द्वयं पठन्तः पुष्प ( स ) बिन्दुच्छिद्रं सरन्ध्रमाहुः। तेषामष्टौ दोषाः, खण्डः कीर्णैकदेशः दुर्विद्धो दुर्देशविद्धः, लेखाकीर्णो राजिजमानीति।

बार्हस्पत्यौ आत्र श्लोकौ भवतः—

पुष्पच्छिद्रोऽथ दुर्विद्धः शर्करानुगतस्तथा।
मन्दरागप्रभश्चैव जातिभेदाः प्रकीर्तिताः॥
प्रान्तश्च वामवृत्तश्च वलितास्यकशान्वितः।
कृष्णौकश्च विशीर्णश्च न हि शास्त्रे प्रशस्यते॥ इति।

अष्टादशप्रकारान्तरजातिमणीनाह—विमलक इत्यादि।

विमलकः[1] श्वेतहरितः, सस्यको नीलः अञ्जनमूलको नीलश्यामः, पित्तको गोपित्ताभः, सुलभकः शुक्लः, लोहितकः पर्यन्ते रक्तः मध्ये कृष्णः, अमृगाश्मकस्सितासितः, ज्योतीरसकः शुक्ललोहितः, मैलेयको हिङ्गुलकच्छविः। आहिच्छत्रको मन्दरागः। कूर्पः शर्कराकीर्णः, पूतिकूर्पस्सिक्थकच्छायः, मधूच्छिष्टच्छाय इत्यन्ये। सुगन्धिकूर्पो मुद्गवर्णः, क्षीरवको दुग्धधवलः। शुक्तिचूर्णकोऽनेकवर्णः, शिलाप्रवालकः प्रवालवर्णः, पुलकः कृष्णगर्भः शुक्रपुलकः शुक्लान्तर इत्यन्यतरजातयः।

पूर्वोक्तास्तूत्तमाः वक्ष्यमाणाः काचमणयोऽधमा इति, तदाह—शेषाः काचमणय इति, काचो धातुद्रव्यं येन स्नेहसुरादिभाण्डानि क्रियन्ते। तन्मया मणयो काचमणयो सदा रागाः काचमणय इत्यन्ये। तथा च—

"पंचविंशतिभेदानां गुणास्त्वेकादश स्मृताः।
सप्त दोषा मणीनां तु दशाऽष्टौ च [2]विजायते॥" इति।

श्रीमूला

अथ वज्रमणेराकरयोनिवर्णगुणदोषा वर्ण्यन्ते। तत्राकरानाह—सभेत्यादि।

---

१. श्चोति—पा० २. विजातयः—पा०

**इन्द्रवानकं च वज्रम् । खनिः स्रोतः प्रकीर्णकं च योनयः ।**

[ वज्रवर्णाः ]

**मार्जाराक्षकं च शिरीषपुष्पकं गोमूत्रकं गोमेदकं शुद्धस्फटिकं मूलाटीपुष्पकवर्णं मणिवर्णानामन्यतमवर्णमिति वज्रवर्णाः ।**

---

श्रीमूला

वज्रं हीरः, सभाराष्ट्रकं, त्रैदर्भकं, मध्यमराष्ट्रकं, कोसलोत्पन्नं, कास्तीरराष्ट्रकं कास्तीरराष्ट्रजं, श्रीकटनकं श्रीकटनपर्वतभवं, मणिमन्तकम् उत्तरापथवर्तिमणिमन्तकाख्यपर्वतजम् इन्द्रवानकं कालिङ्गकं, चः समुच्चये । एवं सभाराष्ट्रादयो वज्रस्य षडाकरा उक्ताः । एतच्चोपलक्षणमन्यत्रापि वज्रस्योत्पत्तिदर्शनादिति ज्ञेयम् ।

वज्रस्य त्रिविधां योनिमाह—खनिरिति । खनिः खन्यमानो भूप्रदेशविशेषः, स्रोतः जलप्रवाहविशेषः, प्रकीर्णकं गजदन्तमूलादि ।

वज्रस्य वर्णानाह—मार्जारित्यादि । मार्जाराक्षकं मार्जारनेत्रच्छायम् । शेषं व्याख्यातचरम् । मार्जारनेत्रादिपुष्पकान्तसवर्णत्वंप्रायिकत्वात् पृथगभिधाय विरलदर्शनं । मण्यन्तरसाधारणं वर्णान्तरमतिदिशति—मणिवर्णानामन्यतमवर्णमिति । इति वज्रवर्णाः ।

चाणक्यटीका

वज्ररत्नमाह—वैदर्भविषये वेण्णातटपार्श्वे जातं सभाराष्ट्रकम् । ( तज्जु ? मध्य ) म राष्ट्रकं कलिङ्गोद्भवं भोगवल्लीति देशभाषया । कास्तीरराष्ट्रकं शूर्पारकभूमिः । श्रीकटनकं काञ्चीदेशः, कङ्कादिषु पर्वत इत्येके । मणिमन्तकं ( श ? क ) र्कभूमिजम् । इन्द्रवानकं कालि ( न्द्य ? ङ्गय ) म् । इत्याकरतो वज्रम् ॥

खनिः—खन्यत इति । ( सद्यः ? ) प्रकीर्णकं वेण्वादि ।

मार्जाराक्षम् इत्यादि संज्ञयैवानु ( ग ? ) मितार्थम् । उक्तानां च मणिवर्णानाम्रन्यतममणिवर्णमिति साधारणा वज्रवर्णाः ॥

प्रतिपदपञ्चिका

सम्प्रति वज्रस्याकरयोनिवर्णगुणदोषानाह—सभाराष्ट्रकमित्यादि, सभाराष्ट्रकं वैदर्भकं मध्यमराष्ट्रकं कोसलोद्भवं, काश्मीकर(श्मक)राष्ट्रकं [1]कोशीविषयजम् । श्रीकटनकं वेदोत्कटपर्वतजम् । मणिमन्तकं उत्तरापथे मणिमन्तकपर्वतजम्, इन्द्रवानकं कालिङ्गकम् उपलक्षणं चैतत् [2]अन्यत्रापि सम्भवात् । तथा च मगधकालिङ्गकशूर्पकजलदायसपौण्ड्रकार्बुदत्रिपुरमणिमन्तकसह्यविन्ध्याः । [3]काश्मकराष्ट्रक हिमवदावलन्त्यपदावेदोत्कटनिमिकोसलवैदर्भा जन्मभूमयः बहुधा निर्दिष्टाः वज्राणां [4]येषूत्पत्तिः स्समाम्नाता । तेषां त्रिविधां योनिमाह—

खनिरित्यादि, खल्प(न्य)त इति खनिः भूप्रदेशविशेषः स्रोतः खन्यतिरिक्तो

---

१. काश्ति—पा० । २. अन्यस्यापि—पा० ।

३. काशिकरूषराष्ट्रहिमवावण्त्यापहितो वेदौत्कट—पा० । ४. तेषूत्पत्तिः—पा० ।

[ वज्रेषु उत्तमाः अधमाश्च ]

**स्थूलं स्निग्धं गुरु प्रहारसहं समकोटिकं भाजनलेखि तर्कुभ्रामि भ्राजिष्णु च प्रशस्तम् । नष्टकोणं निरश्रि पर्श्वापवृत्तं च अप्रशस्तम् ।**

---

प्रतिपदपञ्चिका

जलप्रवाहविशेषः प्रकीर्णकं च पूर्ववत्[1] । वेणु शरभ वराह रजतदण्डमालकोलादि[2] ।

वर्णानाह—मार्जाराक्षं मार्जारनयनाभं शिरीषपुष्पकादयस्तु कृतव्याख्याः । ननु मणिवर्णनामन्यतमवर्णमित्यनेनैव तेषां गतत्वात् । तद्ग्रहणं प्रायस्तद्वर्णमेव वज्रं भवतीति ज्ञापनार्थम् ।

श्रीमूला

अष्टौ गुणानाह—स्थूलमिति । स्थूलादित्रिकमवगतार्थम् । प्रहारसहं शिलापुत्रकप्रहारेणाप्यभेद्यं, समकोटिकं समास्तुल्याः कोटयो यस्य तत्, भाजनलेखि सोदकमसृणकांस्यपात्रनिवेशितं वज्रं परिचाल्यमानं सत् पात्रे लेखोत्पादकम्, तर्कुभ्रामि तर्कुर्भ्रमियन्त्रं तद्वद् भ्रमणशीलम्, भ्राजिष्णु अतिमात्रदीप्तिकम्, चः समुच्चये, प्रशस्तम् उत्तमं वज्रम् । श्लोकाश्चात्र भवन्ति—

"तर्कुभ्रामि स्निग्धं समकोटि महद् गुरु प्रहारसहम् ।
तमति च भाजनलेखि प्रशस्ततमं वज्रमुद्दिष्टम् ॥
क्षिप्तमग्नौ च यद् वज्रं वर्णान्यत्वं न गच्छति ।
शाणे वा घृष्यमाणं च निकषे वा विरज्यते ॥
वृत्तिकैराहतं यच्च विपत्तिं नैव गच्छति ।
रागवर्णसमायुक्तं वही रश्मिसमन्वितम् ॥
गुरुस्नेहयुतं चैव गुणैरेभिः समन्वितम् ।
एतद् विशिष्टं वज्राणां रत्नाधिपतिकीर्तितम् ॥
नष्टकोणं निरश्रीकं पार्श्वयातं च वर्जयेत् ॥" इति ।

अधमं त्रिविधमाह—नष्टेत्यादि । नष्टकोणं शिखरशून्यम् निरश्रि अश्रिरहितम् पार्श्वापवृत्तम् एकपार्श्वनिस्सृतम् । अन्ये तु दोषा यथोक्तगुणवैपरीत्यात्मानः स्वयमूहनीयाः । यदाहुः—

"विरूपान् मन्दरागांश्च निष्प्रभान् क्रूरदर्शनान् ।
दग्धांश्चोद्गारिणश्चैव वज्राञ्छत्रुषु निक्षिपेत् ॥" इति ।

इति वज्रनिरूपणम् ।

चाणक्यटीका

प्रहारसहं मुष्टिना हन्यमानमपि न भिद्यते । समकोटिकं समसन्निविष्टाग्रम् । भाजनलेखि यच्चालपाश्रयं तल्लिखति ( तर्कुभ्रामि ) तर्कुवद् भ्रमति भ्राम्यमाणम् ॥

---

१. पूर्ववद्रूयेण । २. दण्डमालादि—पा० ।

[ प्रवालानां निरूपणम् ]

**प्रवालकं आलकन्दकं वैवर्णिकं च, रक्तं पद्मरागं च, करटं गर्भिणिकावर्जमिति।**

---

चाणक्यटीका

नष्टकोणं नष्टशिखरम्। निरश्रि वृत्तम्। पार्श्वापवृत्तम्। वेल्लितपार्श्वम् गुणाभावे तु दोषवत्तार्थोक्तैव ॥

प्रतिपदपञ्चिका

तथा अष्टो वज्रगुणानाह्--स्थूलमिति, तत्र स्थूलस्निग्धगुरुणि गतार्थानि, प्रहारसहं पुत्तिकादिः[1] प्रहारैरप्यभेद्यम्। समकोटिकं षडपि कोटयस्तुल्याः, यस्य भाजने लेख भूषणादौ गाढमपि निबद्धं स्तोककालाच्छिथिलीभवति। सोदके पांकस्य पात्रे निक्षिप्तं प्रचाल्यमानं भाजनं लिखतिलेखां जनयति। तत्क्वयात्कभूभिमिति[2], अभ्रमवदपि भ्रमदिवाभाति। आत्मगतं तमन्तिपरे। भ्राजिष्णु दीप्तिमत्, तथा च।

तत्कुंभ्रामि स्निग्धं समकोटिमहद् गुरु प्रहारसहं।
तमति च भाजनलेखि प्रशस्ततमं ॥ वज्रमुद्दष्टम्।
"क्षिप्तमग्नौ च यद्वज्रं वर्णान्यत्वं न गच्छति।
शाणे वा घृष्यमाणं च निकशे वा विरज्यते ॥
वृत्तिकैराहतं यच्च विपत्तिं नैव गच्छति।
रागवर्णसमायुक्तं बह्वीरश्मिसमन्वितम् ॥
छायायुक्तं सुसंस्थानं शुभाभिः कोटिभिर्वृतम्।
गुरुस्नेहयुतं चैव गुणैरेभिस्समन्वितम् ॥
एतद्विशिष्टं वज्राणां रत्नाधिपतिकीर्तितम्।
नष्टकोणं निरश्रीकं पार्श्वयातं च वर्जयेत् ॥" इति।

त्रीन् दोषानाह--नष्टकोणमित्यादि, नष्टकोणं कुण्ठशिखरं, निरश्रीकं[3] अश्रीकरहितम्। पार्श्वापवृत्तं एकपार्श्वनिस्सृतमिति, येत्वन्ये दोषाः ते यथोक्तगुणवैपरीत्यात्तत्रैव अन्तर्भूताः द्रष्टव्याः। तथा च आगमः—

"विरूपान्मन्दरागांश्च निष्प्रभान् क्रूरदर्शनान्।
दग्धांश्चूत्कारिणश्चैव[4] वज्रान् शत्रुषु निक्षिपेत् ॥" इति।

श्रीमूला

अथ प्रवालमाह—प्रवालकमिति। प्रवालकम्, आलकन्दकम् अलकन्दो नाम बर्बरकूले समुद्रैकदेशस्तत्र भम्, वैवर्णिकं विवर्णो नाम यवनद्वीपे समुद्रैकदेशस्तत्रोत्पन्नं च, इति द्वियोनिकम्। रक्तं पद्मरागं चेति द्विवर्णकम्। करटगर्भिणिकावर्जमिति द्विदोषत्ववचनम्, करटं क्रिमिजग्धं गर्भिणिकां स्थूलमध्यं च वर्जयित्वान्यत् प्रवालक-

---

१. पुत्रिकादिः। —पा० २. तकुंभ्रामिति।—पा०

३. निरसुकम् असुरहितम्—पा० ४. चौद्गारिणः—पा०

[ सारवर्गेषु चन्दनसम्बन्धिजातिवर्ण-
गन्धानां निरूपणम् ]

**चन्दनं—सातनं रक्तं भूमिगन्धि; गोशीर्षकं कालताम्रं मत्स्यगन्धि; हरिचन्दनं शुकपत्रवर्णं आम्रगन्धि; तार्णसं च; ग्रामेरुकं रक्तं रक्तकालं वा बस्तमूत्रगन्धि; दैवसभेयं रक्तं पद्मगन्धि; जावकं च;**

---

श्रीमूला

मुपादेयमित्यर्थः। इतिशब्दः समाप्तौ, रत्नपरीक्षा समाप्तेत्यर्थः।

इति प्रवालनिरूपणम्।

चाणक्यटीका

प्रवालकरत्नावयवमाह—अलत्सान्द्रदेशभवम्? अलत्साद्रकं रक्तम्। विवल्गुके भवं वैवल्गुकम्, तत् पद्मरागसदृशरागम्। द्विविधं प्रवालकं करटगर्भिणीवर्जमिति क्रिमिजग्धमिव यत्, गर्भध्यातमिव यत्, इत्येतद्दोषद्वयवर्जं सर्वं प्रशस्तमिति। रत्नं व्याख्यातम्॥

प्रतिपदपञ्चिका

प्रवालकद्वियोनिं द्विवर्णं द्विदोषं चाह—प्रवालकमित्यादि, तत्रालकं द्वे बर्बरकूले समुद्रैकदेशे तत्र जातमालकन्द्रकं रक्तवर्णम्, यवनद्वीपे विवर्णोनाम समुद्रैकदेशः तत्र भवं वैवर्णिकम्। तत्पद्मरागं पद्मवर्णं चकाराद्रक्तं च भवति। करटं क्रमिभिरुपभक्षितं गर्भिणीकामध्ये स्थूला यष्टिरिति, इति शब्दो रत्नपरीक्षापरिसमाप्त्यर्थः।

श्रीमूला

अथ सारेषु निरूपणीयेषु प्रथमं सारमुख्यं चन्दनमाह—चन्दनमिति। चन्दनम् अधिक्रियत इत्यर्थः। तस्य सातनादय उत्पत्तिभूमयः षोडश, रक्तादयो वर्णा नव, भूमिगन्धदयो गन्धाः षट्, लघुत्वादयो गुणा एकादश। त एतेऽभिधीयन्ते। सातनमिति। सातनं सातनदेशभवम्, रक्तं रक्तवर्णं, भूमिगन्धि नवसिक्तभूसमानगन्धम्। गोशीर्षकं तद्देशजम्, कालताम्रं कृष्णशोणम्, मत्स्यगन्धि मत्स्यतुल्यगन्धम्, रक्तकरवीरतुल्यगन्धीति स्वामी। हरिचन्दनं हरिदेशजं चन्दनम्, शुकपत्रवर्णम्, आम्रगन्धि चूतफलतुल्यगन्धि। तार्णसं च तृणसाख्यनदीनिकटभवं चन्दनं चकारात् शुकपत्रवर्णमाम्रगन्धि च ग्रामेरुकं ग्रामेरुप्रभम्, रक्तं रक्तकालं वा, बस्तमूत्रगन्धि अजमूत्रगन्धि, बस्तशब्दः कस्तूरीमृगवचन इत्यन्ये। दैवसभेयं देवसभायां भवम्, रक्तम्, पद्मगन्धि सातनादयस्त्रायोदश मलयैकदेशाः। जावकं च जावकदेशभवं च रक्तं पद्मगन्धि

चाणक्यटीका

सारमाह—सातनपर्वते जातं सातनं प्रथमवर्षाभिषिक्तभूमिसमानगन्धि। गोशीर्षाकृतिपर्वतोत्पन्नं गोशीर्षकं नाम। कालताम्रं व्यामिश्रवर्णम्। मत्स्यगन्ध्यपि सन्तापहरम्। हरिमण्डूकस्तदाकार पर्वते जातं हरिचन्दनं पक्वाम्रफलगन्धि। तृणसा

**जोङ्गकं रक्तं रक्तकालं वा स्निग्धम्; तौरूपं च; मालेयं पाण्डुरक्तम् कुचन्दनं कालवर्णं गोमूत्रगन्धि; कालपर्वतकं रूक्षमगुरुकालं रक्तं रक्तकालं वा; कालपर्वतकमनवद्यवर्णं वा; कोशकारपर्वतकं कालं कालचित्रं वा;**

---

प्रतिपदपञ्चिका

एवं रत्नान्यभिधाय साराण्यभिधास्यन् सर्वसारप्रधानस्य चन्दनस्य जातिवर्ण-गन्धगुणानाह—चन्दनमित्यादि, चन्दनमित्यधिकारः। तत्र सातनादीनि षोडश क्षेत्रणि। भूमिगन्धादयः षड्गन्धाः। रक्तादयो नव वर्णाः। लाघवादयः एकादशगुणाः तानाह—सातनमिति।

तत्र सातनादयस्त्रयोदश मलयैकदेशः जापकादयस्त्रयःकामरूपेषु भवन्ति। सातनादीनि सातनं रक्तं विर्णतः भूमिगन्धि नवजलसिक्तं भूमिगन्धि गोशीर्षकं कालं-कालरूपं शुकपत्रवर्णं शुकपिछवर्णं आम्रगन्धि सहकारगन्धि तार्णसं च। शुकपत्रवर्ण माह—मात्र(नृ)गन्धि चेति, ग्रामेरुकं रक्तं वस्तमूत्रगन्धि, वस्तः छागः तन्मूत्रस्य हि परिणामे अतीव सौगन्ध्यं भवतीति तत्तुल्यगन्धि। अन्येतु कस्तूरिकामाचक्षते। दैव-

श्रीमूला

चेत्यनुषज्यते। जोङ्गकं, रक्तं रक्तकालं वा, स्निग्धं स्नेहगुणयुक्तं, गन्धान्तरानुक्त्याऽत्रापि पद्मगन्धीति सम्बध्यते। तौरूपं च, जोङ्गकमिव रक्तं रक्तकालं वा स्निग्धं पद्मगन्धि चेत्यर्थः। जावकादित्रिकं कामरूपजं बोद्धव्यम्। मालेयम्, पाण्डुरक्तं पूर्ववत् पद्मगन्धि च। एवञ्च दैवसभेयादिमालेयकान्तपञ्चकस्य पद्मगन्धित्वमुक्तं भवति। कुचन्दनम्, कालवर्णकं कृष्णम्, गोमूत्रगन्धि गोमूत्रं हि परिणामे सुगन्धि, अपरे तु गोमूत्रं नीलोत्पलमिति सम्प्रदाय इत्याहुः। कालपर्वतकं तद्देशभवम्, रूक्षं खरम्, अगुरुकालम् अगुरुवत् कृष्णम्, रक्तम्, रक्तकालं वा कृष्णारुणं वा। पूर्वोक्तन्ययेनात्र गोमूत्रगन्धीति सम्बन्धनीयम्। केषुचिदादर्शेषु 'कुचन्दनं कालरूक्षमगुरुकालं रक्तं रक्तकालं वा कालपर्वतकमनवद्यवर्णं वा' इति पाठो दृश्यते। स गन्धानुक्तेरशुद्धः प्रतिभाति। तत्रा'नवद्यवर्णमि'त्यस्य कुङ्कुमवर्णमित्यर्थः, शेषं तु सुबोधम्। कोशकारपर्वतकं

चाणक्यटीका

नाम नदी, ततटपर्वते जातं तार्णसं हरिचन्दनगुणमेव। ग्रामेरुकं ग्रामेरुपर्वते जातम्। दैवसभेयमिति मलयदर्दुरदेवसभाश्रयः पर्वतः पाण्ड्यविषये सहावस्थितः, देवसभे जातं दैवसभेयम्। जावकं च जावकपर्तते जातम्। तत्सदृशमेव जोङ्गकं कामरूपे जोङ्गपर्वते जातं ( स्निग्धच्छेदकः ? ) पद्मगन्धेवाधिकारात्। कौङ्कुमकं च कुङ्कुमपर्वत ( ज ) मपि। एवमेव मालेयकं मालपर्वतभवं पाण्डुरक्तमिति॥

कालं कुचन्दनमिति मालेयेकमेवेदमगन्धं गन्धस्यानभिधानाद् रूक्षत्वात् कुचन्दनं कुत्सितचन्दनम्। कालवर्वतकं कालपवर्तजं अन ( व ) द्यवर्णं वा, ( गी ? ाक ) लं वेति वा शब्दात्। कोशकारपर्वकं कोशकाराण्डाकारपर्वनजं कालचित्रं

**शीतोदकीयं पद्माभं कालस्निग्धं वा; नागपर्वतकं रूक्षं शैवलवर्णं वा; शाकलं कपिलमिति ॥**

[ चन्दनगुणाः ]

**लघु स्निग्धम् अश्यानं सर्पिस्स्नेहलेपि गन्धसुखं त्वगनुसारि अनुल्बणं अविरागि उष्णसहं दाहग्राहि सुखस्पर्शनमिति चन्दनगुणाः ।**

---

### श्रीमूला

तदाख्यदेशभवम्, कालं कालचित्रं वा कृष्णकर्बुरं वा । शीतोदकीयं शीतोदकदेशभवम्, पद्माभं पद्मवर्णम्, कालस्निग्धं वा । नागपर्वतकं तदाख्यदेशजम्, रूक्षं खरम्, शैवलवर्णं जल नीलीवर्णम् । शाकलं शाकलदेशोद्भवं, कपिलं कडारवर्णम् । इह कालपर्वतकादीनां शाकलान्तानां कुचन्दनवद् गोमूत्रगन्धित्वं द्रष्टव्यम् ।

### चाणक्यटीका

काललेखाचित्रम् । शीतोदका नदी, तत्समीपपर्वतजं शीतोदकीयम् । नागाकारपर्वतजं नागपर्वतकं शैवलवर्णं वा, कालं वेति ( वा ) शब्दात् । शकलपर्वतजं शाकलम् । षड्भिश्चन्दनैर्निर्गन्धैः सह षोडश चन्दनानि भवन्ति ॥

### प्रतिपदपञ्चिका

सभेयं रक्तं पद्मगन्धि, जावकं च कामरूपजं रक्तं पद्मरागं[1] च जोङ्गकं कामरूपजमेव । तद्रक्तं भवति । रक्तकालं वा स्निग्धं स्नेहवत् । गन्धतस्तु पद्मगन्ध्येव [2]तौरूपं च कामरूपजमेव तत् जोङ्गकवद्रक्तम्[3] । रक्तकालं वा स्निग्धं पद्मगन्ध्येव मालेयं पाण्डुरक्तम् पद्मगन्ध्येव एवं च सति दैवसभेयादीनि मालेयान्तानि पञ्च पद्मगन्धीनि भवन्ति । कुचन्दनं कालवर्णकं गोमूत्रगन्धि गोमूत्रं हि परिणामे अतीव सुगन्धि भवति । गोमूत्रं नीलोत्पलमित्यपरेषां च सम्प्रदायः कालपर्वतकं रूक्षं अगुरुकालं रक्तं रक्तकालं वा । कालपर्वतकं कालं कालचित्रं वा कृष्णशबलं शीतोदकीयं पद्मरागं पद्मवर्णं कालस्निग्धं वा कृष्णस्निग्धं नागपर्वतकं रूक्षं शैवलवर्णं शाकलं बहुवर्णम् ।

### श्रीमूला

एवं जातिवर्णगन्धा उक्ताः। गुणानाह—लघ्वित्यादि । लघु अभारिकम्, स्निग्धं मसृणम्, अश्यानं चिरशोषि, सर्पिःस्नेहलेपि घृतमिव देहं स्नेहेन लिम्पति यत् तथाभूतम्, गन्धसुखं गन्धेन मोदजनकं त्वगनुसारि त्वचमनुप्रविश्य सुखकरम्, अनुल्बणं सूक्ष्मत्वादस्फुटम्, अविरागि द्रव्यान्तरमिश्रणे स्वेदाद्युपघाते चाविकृतवर्णगन्धम्, उष्णसहं स्वलिप्ताङ्गस्योष्णसंवेदनप्रतिबन्धि, दाहग्राहि सन्तापहरम्, सुखस्पर्शनं स्पर्शे नवनीतवत् सुखावहम् । इति चन्दनगुणाः अनेन प्रकारेणैकादश चन्दनस्य

---

१. पद्मगन्धं च—पा० । २. ता—पा० । ३. छ—पा० ।

[ अगुरुजातिवर्णगन्धानां निरूपणम् ]

**अगुरुः—जोङ्गकं कालं कालचित्रं मण्डलचित्रं वा । श्यामं दोङ्गकम् । पारसमुद्रकं चित्ररूपम् । उशीरगन्धि नवमालिकागन्धि वेति ।**

---

श्रीमूला

गुणा विज्ञेयाः । अत्र संग्रहश्लोकं पठन्ति—

"षड् गन्धा नवधा वर्णो गुणाश्चैकादश स्मृताः ।
चन्दनानां समासेन षोडशोत्पत्तिभूमयः ॥" इति ।

चाणक्यटीका

लघु लिप्तगात्रस्य लाघवत् । अश्यानम् नाशु शुष्यति । सर्पिः स्नेहानुलेपि सर्पिः स्नेहवदनुलेप्तुं शीलमस्येति सर्पिः । स्नेहानुलेपनप्रख्यं सुकुमारस्पर्शत्वात् सर्वगात्रानुसर्पणाद्वा न तैलस्नेहवदिति सर्पिर्ग्रहणम् । गन्धसुखं हृद्यगन्धत्पात् । त्वगनुसारि रोमकूपैस्त्वगन्तः प्रवेशि । अनुल्बणं सममेव स्थितं नान्यस्मिन् प्रदेशे बहुलम् अन्यस्मिन्न ( च्छं ? ल्पम् ) । अविरागि नातपेन विक्रियते । येनानुलिप्तः पश्चादुष्णेन न पीड्यते तद् उष्णसहम् । यदुन्मत्तचारितापशमनं तद् दाहग्राहि । येनानुलिप्य स्नातस्य स्पर्शमात्रेणैव सुखमुत्पद्यते सुखस्पर्शम् । इत्येते यथासम्भवं साधारणाश्चन्दनगुणाः ॥

प्रतिपदपञ्चिका

एवं जातिवर्णगन्धानभिधाय गुणानाह—लघु स्निग्धमित्यादि, लघु शरीरलग्नमभारिकं स्निग्धं अपरुषं अश्यानमचिरशोषि सर्वं स्नेहलेपि—यच्छरीरं स्नेहेनानुलिम्पति न मृत्तिकेव त्वचं सङ्कोचयति । गन्धसुगन्धेन सुखावहं त्वगनुसारि रोमकूपाननुप्रविश्य त्वगन्तराह्लादि । अनुल्बणं सूक्ष्मत्वादनुद्धतम्, अविरागिवर्णगन्धयोरविकारिद्रव्यान्तरमिश्रीभावे स्वेदाद्युपघाते चोष्णसहं तदा लिप्तस्य हि तीव्रतापेपि बाधाभावात् । दाहग्राहि परितापहारि सुखस्पर्शं सूक्ष्मत्वात् नवनीतवत् सुखावहं गुणचूर्णवदपरुषस्पर्शमिति । तथा च—

"षड्गन्धा नवधा वर्णा गुणाश्चैकादश स्मृताः ।
चन्दनानां समासेन षोडशोत्पत्तिभूमयः । इति ।

श्रीमूला

अथाऽगुरुजातिवर्णगन्धगुणानाह—अगुर्वित्यादि । अगुर्वित्याधिकारः । जोङ्गकं तदाख्यमगुरु त्रिविधम्, कालं कृष्णम्, कालचित्रम् कृष्णगौररेखामिश्रम्, मण्डलचित्रं कृष्णगौरबिन्दुचित्रमिति स्वामी, वाशब्दः समुच्चये । दोङ्गकं तदाख्यम्, श्यामम् । जोंगकदोंगके कामरूपभवे । पारसमुद्रकं सिंहलद्वीपोत्पन्नम्, चित्ररूपं नानावर्णम् । गन्धमाह—उशीरगन्धि, नवमालिकागन्धि वेति । गन्धद्वैविध्यमनेनोक्तम् ।

---

१. सम्भवः ।

[ अगुरुगुणाः ]

**गुरु स्निग्धं पेशलगन्धि निर्हारि अग्निसहं असंप्लुतधूमं समगन्धं विमर्दसहमिति अगुरुगुणाः ।**

---

चाणक्यटीका

अगुरुसारमाह—( जोङ्गकम् ) कालचित्रं काललेखाभिश्चित्रम्, मण्डलैर्वा विवर्णम् । वङ्गदेशभवं वाङ्गकं समतभवं ( ? ) श्यामम् । पारेसमुद्रकं यवनादि-द्वीपान्तरजं चित्ररूपमनेकवर्णं गुरुमत्प्रमाणादगुर्वन्तरादित्यर्थः ॥

प्रतिपदपञ्चिका

अगुरुजातवर्णगन्धगुणानाह—जोङ्गकमित्यादि ।

जोङ्गकं त्रिविधं कालं कृष्णं कालचित्रं कृष्णं गौरलेखामिश्रं मण्डलचित्रं कृष्णं गौरबिन्दुचित्रं जोङ्गकम् श्यामं वर्णतस्तदुभयं कामरुपजंपारसमुद्रकं सिंहलद्वीपजं चित्ररूपं अनेकवर्णम् । गन्धतस्तु द्विविधं उशीरगन्धि नवमालिकागन्धि चेति ।

श्रीमूला

अगुरुणो जातिवर्णगन्धानुक्त्वा । गुणानाह—गुर्विति । गुरु भारिकं, स्निग्धम् अपरुषम्, पेशलगन्धि हृद्यगन्धम्, निर्हारि दूरप्रसृत्वरगन्धम्, अग्निसहम् अग्निना क्षिप्रं न दह्यते, असंप्लुतधूमम् अव्याकुलधूमम्, समगन्धं दह्यमानमादिमध्यान्तेष्वेकरूप-गन्धम्, विमर्दसहं वस्त्रादिनिर्माजनेऽप्यक्षीयमाणगन्धमित्यर्थः । इति अगुरुगुणाः । तदेवम्—

"उत्पत्तिभूमयस्तिस्रः कृष्णो वर्णः प्रधानतः ।
द्वावेवागुरुणो गन्धौ गुणास्तस्याष्ट कीर्तिताः ॥"

इति संग्रहश्लोकः ।

चाणक्यटीका

पेशलगन्धं मनोज्ञगन्धम् । निर्हारि दूरोपनिपातिगन्धं स्थिरगन्धमित्यर्थः । अग्निसहं चिराद् दह्यते, नाशु भस्मसाद् भवति । असम्प्लुतधूमम् अवस्थितधूमम् बहुलधूमम् ( समगन्धम् ) आदिमध्यावसानेषु सदृशगन्धम् । विमर्दसहं द्रव्यान्तरसङ्गमे कालान्तरे च स्वरूपापरित्यागात् ॥

प्रतिपदपञ्चिका

अष्टौ गुणानाह[1] गुर्वित्यादि, गुरु भारिकं स्निग्धं स्पर्शे पेशलं बहुलगन्थं निर्हारि दूरनिर्गतस्थायिगन्धमग्निसहं चिराद्दह्यते । असम्प्लुतधूममविच्छिन्नधूमकम् समगन्धि दह्यमादिमाध्यावसानेषु द्रव्यान्तरयोजितं वा समगन्थं विमर्दसहं निवसन-प्रावरणाद्युपभोगैरप्यक्षीयमाणमिति । तथा च "उत्पत्तिभूमयस्तिस्राः कृष्णो वर्णः प्रधानतः । द्वावेवागुरुणो गन्धौ गुणास्तस्याष्ट कीर्तिताः )" इति ।

---

१. अगुरुगुणानाह—पा०।

[ देशवर्णगन्धादिभेदेन भिन्नानां तैलपर्णिका-
भिधानगन्धवृक्षाणां भेदाः ]

**तैलपर्णिकम्—अशोकग्रामिकं मांसवर्णं पद्मगन्धि; जोङ्गकं रक्तपीतकमुत्पलगन्धि गोमूत्रगन्धि वा; ग्रामेरुकं स्निग्धं गोमूत्रगन्धि; सौवर्णकुडयकं रक्तपीतं मातुलुङ्गगन्धि; पूर्णकद्वीपकं पद्मगन्धि नवनीतगन्धि वेति ।**

[ वर्णगन्धदेशादिभेदेन भिन्नानां भद्रश्रीया-
भिधानचन्दनविशेषाणां भेदाः ]

**भद्रश्रीयम्—पारलौहित्यकं जातीवर्णम्; आन्तरवत्यं उशीरवर्णम् उभयं कुष्ठगन्धि चेति ।**

---

श्रीमूला

अथ तैलपर्णिकस्य योन्यादिकमाह—तैलपर्णिकमित्यादि । तैलपर्णिकमित्यधिकारः । अशोकग्रामिकम् अशोकग्रामे कामरूपवर्तिनि भवम् मांसवर्णं हरिणमांसपेशीवर्णमिति स्वामी, पद्मगन्धि । जोङ्गकं कामरूपस्थे जोङ्गाख्ये प्रदेशे भवम् रक्तपीतकं मनश्शिलावर्णम्, उत्पलगन्धि गोमूत्रगन्धि वा भवति । ग्रामेरुकं कामरूपवर्तिनि ग्रामेरुसंज्ञे ग्रामे भवम्, स्निग्धं, गोमूत्रगन्धि, जोङ्गकवद् रक्तपीतवर्णम् । सौवर्णकुड्यकं सुवर्णकुड्यो नाम ग्रामः कामरूपगः तत्र जातं रक्तपीतम्, मातुलुङ्गगन्धि । पूर्णकद्वीपकं पूर्णकद्वीपः कामरूपेष्वेव तत्र भवम्, पद्मगन्धि, नवनीतगन्धि वा, वर्णतस्तु रक्तपीतम् ।

भद्रश्रीयस्य योन्यादिकमाह—भद्रश्रीयमित्यादि । भद्रश्रीयं चन्दनविशेषः । भद्रश्रीयपदार्थे—

'केचित् कर्पूरमित्याहुस्तक्कोलमिति चापरे ।
श्रीवासकं तथा केचित् केचिल्लोहितचन्दनम् ॥'

इति विप्रतिपत्तयः स्वामिनोक्ताः । पारलौहित्यकं कामरूपे लौहित्याख्यनदपारभवं, जातीवर्णं जातीकुसुमवर्णम् । आन्तरवत्यं कामरूपेष्वेवान्तरवत्याख्यनदीतीरे जातम्, उशीरवर्णं लामज्जच्छायम् । उभयं पारलौहित्यकादिद्विकम्, कुष्ठगन्धि च पारिभाव्याख्यौषधगन्धि च । इति शब्दः भद्रश्रीयनिरूपणसमाप्तौ ।

चाणक्यटीका

सारान्तरमाह—तैलपर्णिकं नाम चन्दनाकारापरद्रव्यम् । तत् पञ्चविधम्—अशोकग्रामे भवम् अशोकग्रामीयम् । जोङ्गकं कामरूपजम् । ग्रामेरुकं ग्रामेरुदेशभवम् । सौवर्णकुड्यकं सुवर्णकुड्यदेशभवम् । सुवर्णद्वीपकं च ॥

भद्रश्रीयं जातिनाम गन्धद्रव्यस्येदम् । पारेलौहित्यकं लोहित्यपारे भवम् । जातिवर्णकं जातिपुष्पवर्णम् । आन्तरवन्त्यं अवन्तीनामन्तरले जातम् ॥

कालेयकाभिधानकाष्ठविशेषस्य देशादिभेदाः
तैलपर्णिकादीनां गुणाश्च ]

**कलेयाकः—स्वर्णभूमिजः; स्निग्धपीतकः; औत्तरपर्वतको रक्तपोतक इति साराः। पिण्डक्वाथधूमसहम् अविरागि योगानुविधायि च। चन्दनागुरुवच्च तेषां गुणाः।**

---

प्रतिपदपञ्चिका

तैलवर्णिकस्य योनिवर्णगन्धगुणानाह-तैलवर्णिकमित्यादि, तैलवर्णिकं ग्रन्थिवर्णिकं। अशोकग्रामः कामरूपेषु तत्रभवं अशोकग्रामीयं, हरिणमांसपेशिवर्णं पद्मगन्धि-जोङ्गकं कामरूपेष्वेवान्तरवत्यभिधानं तत्र भवं जोङ्गकं। रक्तपीतं मनःशिलावर्णं उत्पलगन्थि गोमूत्रगन्थि वा ग्रामेरुकं कामरूपेष्वेव तत्र भवं ग्रामेरुकं स्निग्धं गोमूत्रगन्धि वर्णस्तु जोङ्गकवत्।

सौवर्णकुड्यकं कामरूपेष्वेत्र सुवर्णकुड्यः तत्र भवं रक्तपीतकं। मातुलुङ्गगन्धि। पूर्णकमपि कामरूपेष्वेव शेषमृजुभद्रश्रोयमाह-भद्रश्रोयमित्यादि, तत्र प्रति विप्रतिपत्तयो व्याख्यातृणां—

केचित्कर्पूरमित्याहुः, तक्कोलमिति चापरे।
श्रीवासकं तथा केचित्केचिल्लोहितचन्दनमिति,
पारलौहित्यकम् कामरूपेष्वेवान्तरवत्यभिधाननदोकूलजम्।

श्रीमूला

कालेयकस्य योन्यादिकमाह।—कालेयक इति। कालेयको नाम काष्ठविशेषः, स स्वर्णभूमिजः सुवर्णभूमिर्भर्मदेशस्तत्रोत्पन्नः, स्निग्धपीतकः मसृणः पीतवर्णश्च। औत्तरपर्वतकः हैमवतः, रक्तपीतकः मनःशिलावर्णः। इति उक्तैः प्रकारैः, साराः चन्दनादिकालेयकान्ताः सारपदार्था निरूपिता इत्यर्थः।

अथ तैलपर्णिकादोनां त्रयाणां गुणमाह—पिण्डेत्यादि। पिण्डक्वाथधूमसहं पिण्डं पेषणादिना पिण्डीकरणं क्वाथम् अग्निना क्वथनं धूमं धूपनं च सहत इति तथाभूतं, पेषणक्वथनधूपनेष्वविसंवादिगन्धमित्यर्थः, अविरागि द्रव्यान्तरमिश्रणेन कालान्तरेण वा निर्विकारस्वभावम्, योगानुविधायि च गन्धयुक्त्यनुकूलं च। तैलपर्णिकादित्रिकं तु विशेष्यं गम्यम्। उक्ताः पिण्डसहत्वादयो न केवलं तैलपर्णिकादीनां गुणाः, किन्तु चन्दनागुरुवच्च तेषां गुणा भवन्तीत्याह—चन्दनागुरुवच्च तेषां गुणा इति। चन्दनवद् गुणाः एकादश लघुत्वादयः, अगुरुवद् गुणा अष्टौ गुरुत्वादयः।

इति सारनिरूपणम्।

[ फल्गूनां मध्ये पञ्चदश चर्मजातयः ]

**कान्तनावकं प्रैयकं चौत्तरपर्वतकं चर्म। कान्तनावकं मयूरग्रीवाभं, प्रैयकं नीलपीतं श्वेतं लेखाचित्रं बिन्दुचित्रं; तदुभयमष्टांगुलायामम्।**

चाणक्यटीका

कालेयको जात्या गन्धद्रव्यम्। स द्विविधः सुवर्णभूमिजः। औ ( त्क ? त्त रपर्वतकः हैमवतः। इतिसाराः॥

पिष्टम्, अन्येन संसर्गं, सहत इति पिण्डसहम्। पिटकादिषु क्वाथं सहते वैवर्ण्यं न भजते। अन्येन युज्यमानं स्वगन्धं न जहाति। अविरागि स्नेहादिषु न वैवर्ण्यं भजते। योगानुविधयि सर्वद्रव्यसंसर्गानुगुणमित्यर्थः। तैलपर्णिकादीनामेते वैशेषिका गुणाः, साधारणास्तु चन्दनागुरुवदिति॥

प्रतिपदपञ्चिका

शेषमृजुकालेयकमाह-कालेयक इत्यादि, कालेयकः काष्ठविशेषः। स द्विविधः सुवर्णभूमिजः सुवर्णद्वीपोत्पन्नः स्निग्धपीतकः उत्तरपर्वतो हिमवान् तत्र भवः औत्तरपर्वतकः रक्तपीतक इति। सारा इतिशब्दः[1] प्रकारे, साराश्चन्दनादयः कालेयकपर्यन्ता व्याख्याता इति। तत्र तैलपर्णिकभद्रश्रीयकालेयकानां गुणानाह-पिण्डक्वाथधूमसहमित्यादि,

पिण्डसहं पिष्यमाणमपि संवादि क्वाथसहं[2] क्वाथ्यमानमपि कृतगन्धं धूमसहं। चिरं दह्यमानं तिष्ठति, अविरागि कालान्तरेण द्रव्यान्तरमिश्रितं वा न विरज्येत। चन्दनागुरुवदिति। त एव द्रव्यगुणाश्चैषां भवन्तीति। एवं रत्नाान

श्रीमूला

अथ फल्गुषु निरूपणीयेषु प्रथमं पञ्चदशप्रकारा चर्मजातिर्निरूप्यते—कान्तनावक-मित्यादिना इति चर्मजातय इत्यन्तेन। तत्रादौ प्रकारद्वयमुद्दिशति—कान्तनावक-मिति। कान्तनावकं तदाख्यदेशभवं, प्रैयकं च तदाख्यदेशभवं च औत्तरपर्वतकं हैमवतम्, चर्म। एवञ्च कान्तनावकप्रैयकाख्यौ हिमवत एवैकदेशौ बोद्धव्यौ। तत्र कान्तनावकम्, मयूरग्रीवाभमित्येकविधम्। प्रैयकं तु, नीलपीतं, श्वेतं, लेखाबिन्दुचित्रं लेखाभिः कृतवैचित्र्यं बिन्दुभिः कृतवैचित्र्यं चेति चतुर्विधम्। तदुभयं कान्तनावकं प्रैयकं च, अष्टाङ्गुलायामम्।

चाणक्यटीका

इदानीं फल्गुद्रव्याण्याह—कान्तनावे जातम्। प्रैयकञ्च[3] उत्तरपर्वतैकदेश (ज)–

---

१. तैलर्वणिक पा० २. सम्पाति पा०

३. प्रियकोऽजिनयोनिर्हरिण इत्यमरः। तस्य तु वैडूर्यमयं प्रियकाजिनसंवृनम् महत माषाश्रयं भेंज दावणः परमासमयम् ( रामायणम् )

**बिसी महाबिसी च द्वादशग्रामीये। अव्यक्तरूपा दुहिलि(त)का चित्रा वा बिसी, परुषा श्वेतप्राया महाबिसी; द्वादशाङ्गुलायाममुभयम्।**

---

### चाणक्यटीका

त्वाद् द्विविधं हैमवमूषि ( कां ? क ) चर्म। नीलकोटिश्वेतबिन्दुभिश्च चित्रम्। तदुभयमष्टाङ्गुलायामम्। तदनुरूपविस्तारमित्यर्थोक्तम्॥

### प्रतिपदपञ्चिका

सारांश्चाभिधाय फल्गून्याह-तत्रापि चर्मणां प्राधान्यात् पञ्चदशप्रकाराणि मूषिकादि चर्माण्याह। तानि च समुद्दिश्य यथोद्देशं स्वयमाचार्य एव व्याचष्टे-कान्तनावक मित्यादिं,

कान्तनावकप्रैयके हिमवत्येकदेशजे औत्तरपर्वतकं हैमवतम् अधिकारश्च। सर्वचर्मणाम्। तत्र कान्तनावकमेकप्रकारमेव। मयूरग्रीवाभम्। प्रैयकं चतुर्विध, नीलपीतकं श्वेतं लेखाचित्रं बिन्दुचित्रं च। तदुभयं कान्तनावकम् प्रैयकं चाष्टाङ्गुलायामं प्रमाणतः।

### श्रीमूला

बिसीति। बिसी महाबिसी च इत्येते चर्मणी, द्वादशग्रामीये हिमालयस्थेषु द्वादशम्लेच्छग्रामेषु भवे। तत्र बिस्याः स्वरूपमाह—अव्यक्तेत्यादि। बिसी, अव्यक्तरूपा सरटविशेषवद् बहुवर्णप्रतिभासयोगादनिर्धारितैकवर्णा, दुहिलिका लोमशा, दुहिलितिकेति क्वापि पाठः, चित्रा वा, भवति। महाबिसी परुषा खरस्पर्शा, श्वेतप्राया धवलवर्णभूयिष्ठा। उभयं बिसी महाबिसीति द्वयम्, द्वादशाङ्गुलायामम्।

### चाणक्यटीका

द्वादशग्रामीये। उत्तरापथे द्वादशग्रामाः तयोः प्रभवः। अव्यक्तरूपा न यथा ( ल )क्ष्यमाणवर्णा दुहिलिका गृहगोधकाकारा। चित्रा वा नानावर्णा। द्विविधा अपि मूषिकाः॥

### प्रतिपदपञ्चिका

तथापि बिसी महाबिसी च द्वादशग्रामीये हिमवत्येव म्लेच्छादिवासभूता द्वादशग्रामाः तेषु च भवा द्वादशग्रामाः तेषु भवे द्वादशग्रामीये। द्वे चर्मणी तयो रूपमाह—अव्यक्तवर्णेति, सर्ववर्णोपेतत्वादपि भावितैककतरवर्णा दुहिलितिका वहुतररोमोपेता चित्रा वा शुक्ललेखाकीर्णा बिसिः। परुषा कर्कशस्पर्शा श्वेतप्राया वर्णान्तरव्यतिकरेऽपि बहुलरधवलवर्णा महाबिसी। तदुभयमपि बिसीमहाबिसीसंज्ञम्। द्वादशाङ्गुलायामं प्रमाणतः। हिमवदन्तर्गत एवारोहाभिधानो देशः। तत्र भवः।

**श्यामिका कालिका कदली चन्द्रोत्तरा शाकुला चारोहजाः।**

**कपिला बिन्दुचित्रा वा श्यामिका; कालिका कपिला कपोतवर्णा वा; तदुभयमष्टांगुलायामम्। परुषा कदलीहस्तायता।**

**सैव चन्द्रचित्रा चन्द्रोत्तरा। कदलीत्रिभागा शाकुला कोठमण्डलचित्रा कृतकर्णिकाऽजिनचित्रा चेति।**

---

### श्रीमूला

आरोहाख्यहिमवत्प्रदेशभवान् श्यामिकाकालिकादीन् पञ्च भेदान् उद्दिशति—श्यामिकेत्यादि। श्यामिका, कपिला कडारवर्णा, बिन्दुचित्रा वा, भवति। कालिका, कपिला, कपोतवर्णा वा, भवति। तदुभयं श्यामिकादिद्वयम्, अष्टांगुलायामम्। कदली, परुषा कर्कशस्पर्शा, हस्तायता चतुर्विंशत्यङ्गुलदीर्घा। वर्णस्त्वस्याः कालिकावत्। सैव कदली, चन्द्रचित्रा चन्द्राकारमण्डलयुक्ता, चन्द्रोत्तरा नाम भवति। प्रमाणं त्वस्याः कदलीवत्। शाकुला, कदलीत्रिभागा कदल्यपेक्षया त्रिगुणपरिमाणा त्रिहस्तायामेत्यर्थ इत्येके, कदलीप्रमाणतृतीयांशप्रमाणा अष्टांगुलायतेत्यर्थ इत्यपरे, कोठमण्डलचित्रा रक्तमण्डलयुक्ता, कृतकर्णिकाजिनचित्रा कृतैः स्वभावकृतैः कर्णिकाजिनैश्चर्मग्रन्थिभिः चित्रा जनितशोभा। चशब्दः समुच्चये। इतिशब्द आरोहजसमाप्तौ।

### चाणक्यटीका

आरोहजा इति। आरोहदेशजाः पञ्चतय्यः। ( कोद्याः ? कास्ताः ) कपिला बिन्दुभिश्चित्रा श्यामिका। चन्द्रकैश्चित्रा। त्रिभागेति हस्तत्रिभागायता। तनग (?)-मण्डलचित्रेति[1] गाङ्ग( ? )स्थानैर्मण्डलैश्चित्रा। तोङ्गं ( ? ) द्विविधमित्यन्ये। कृता च कर्णिका अजिने चतुर्ष्वपि पार्श्वेषु यस्या इति॥

### प्रतिपदपञ्चिका

पञ्चप्रकारं चर्माह—श्यामिकेत्यादि,

कपिला बभ्रुवर्णा बिन्दुभिश्चित्रा वा श्यामिका भवति। कपिला कपोतवर्णा वा हि कालिका भवति। तदुभयमपि चाष्टाङ्गुलायामं प्रमाणतः। परुषा कर्कशा स्पर्शे कदलीहस्तायता चतुर्विंशत्यङ्गुला भवतीति। येषां चर्मणां वर्णप्रमाणानि नोक्तानि तान्यनन्तरं पूर्वाभिहितान्येव द्रष्टव्यानि इति केचित्। अनियतवर्णप्रमाणत्वात्। अनिर्देश इत्यपरे। सैव कदली चन्द्रचित्रा चन्द्राकारशुक्लमण्डलचित्रा चन्द्रोत्तमा भवति। कदलीत्रिभागा हस्तायता कदलीकृतो यो भागो यस्यास्सा

---

१. कोठमण्डलचित्रेति भट्टस्वामी। कोठी मण्डलकमित्यमरः। कान्तनावकादः शाकुलान्ताषृः जिनरअप्रतिवादकः। कौटिलीयो ग्रन्थभागःप्रायशोनूदितो दण्डिना अवन्तिसुन्दरीकथायाम्।

**सामूरं चीनसी सामूली च बाह्लवेयाः ।**

**षट्त्रिंशदंगुलमञ्जनवर्णं सामूरम् । चीनसी रक्तकाली पाण्डुकाली वा । सामूली गोधूमवर्णेति ।**

**सातिना नलतूला वृत्तपुच्छा च औद्राः ।**

**सातिना कृष्णा । नलतूला नलतूलवर्णा । कापिला वृत्तपुच्छा च—इति चर्मजातयः ।**

---

### प्रतिपदपञ्चिका

कदली त्रिभागा । अष्टाङ्गुलेत्यपरे । शालका[1] भवति । कोठमण्डलचित्रा रक्तमण्डलबहुला कृतकर्णिकाजिना स्वाभाविकोत्पन्नचर्मग्रन्थिकेति । आरोहजा एताः श्यामिकादय इति ।

### श्रीमूला

त्रिप्रकारां बाल्हवेयजातिमाह—सामूरमित्यादि । बाह्लवः हिमवत एकदेशः तत्र भवाश्चर्मजातयो बाह्लवेयाः । ढप्रत्ययान्तश्चायम् । षट्त्रिंशदित्यादि चीनसोसामूल्योः प्रमाणं सामूरवत् षट्त्रिंशदंगुलं द्रष्टव्यम् । इतिशब्दः समाप्तौ ।

इत्थं मूषिकादिस्थलचरचर्माण्यभिधाय जलचरचर्माण्याह—सातिनेति । सातिना नलतूला वृत्तपुच्छा च इति त्रिविधाः, औद्राः उद्रों जलमार्जारस्तस्येमे त्वग्भेदा इत्यर्थः । सातिना, कृष्णा कृष्णवर्णा । नलतूला नलतूलवर्णा नलतूलो नलाख्यतृणविशेषस्य पक्ष्म तस्येव वर्णो यस्याः सा । वृत्तपुच्छा, कपिला कडारवर्णा । इति चर्मजातयः । उक्तेन प्रकारेण चर्मजातयोऽनुक्ता अपि यथाप्रसिद्धि बोद्धव्या इत्यर्थः ।

### चाणक्यटीका

बाह्लवदेशे जातं बाह्लवेयं त्रिविधम् । त्रोधती कृष्ण ( ? ) ॥

औद्राह्वा[2] उद्रदेसजाता त्रिविधा । पञ्चसु मूलदेशेषु पञ्चदशमूषिकजातयः अनुक्तप्रमाणाश्च प्रमाणनियतमेव द्रष्टव्यम् । व्याकर्षेणाध्यर्धमित्यन्ये ॥

### प्रतिपदपञ्चिका

त्रिविधं बाह्लवेयमाह—सामूरमित्यादि,

बाल्हवादिभवदेकदेशः आञ्जनवर्णमिति । कृष्णं सामूरं भवति । चीनसी द्विधा रक्तकाली पाण्डुकाली वा सामूली गोधूमवर्णेति त्रिविधम् ।

---

१. शाकुला—पा०

२. उद्रो जलचर प्रगटीविशोषा तदीया औद्रा इति भट्टस्वामी ।

[ चर्मसु प्रशस्तानि ]

**चर्मणां मृदु स्निग्धं बहुलरोम च श्रेष्ठम् ।**

[ मेषलोमनिर्मितानाम् आच्छाद्यानां वर्णक्रिया—
संस्थानभेदैः सप्तदशविधत्वम् ]

**शुद्धं शुद्धरक्तं पक्षरक्तं च आविकम्; खचितं वानचित्रं खण्डसंघात्यं तन्तुविच्छिन्नं च । कम्बलः केचलकः कलमितिका सौमितिका तुरगास्तरणं वर्णकं तलिच्छकं वारवाणः परिस्तोमः समन्तभद्रकं च आविकम् ।**

---

श्रीमूला

चर्मगुणांस्त्रीनाह—चर्मणामित्यादि । चर्मणामिति निर्धारणे षष्ठी । शेषं स्पष्टम् । इति चर्मनिरूपणम् ।

अथाविकं सप्तदशप्रकारं निरूपयिष्यन् प्रथमं रागभेदेन त्रिविधमाह—शुद्धमिति । अवयो मेषा नाम लोमोपकारिणः पशवः, तल्लोमभवम् आविकम् । अधिकारश्चायम् । शुद्धं शुल्कं, शुद्धरक्तं सर्वारुणं, पक्षरक्तं च एकदेशारुणं च, भवति । क्रियाभेदेन चतुर्विधमाह—खचितमिति । खचितं सूचिवानकर्मनिष्पादितं, वानचित्रं वानकर्मणा कृतवैचित्र्यं, खण्डसंघात्यं खचितानामुतानां वा बहूनां खण्डानां संघातेन निष्पादितं, तन्तुविच्छिन्नं च अनुतविसृष्टैस्तन्तुभिर्मध्ये कृतविच्छेदं जालकोपयोगि च ।

संस्थानकृतान् दश भेदानाह—कम्बल इति । कम्बलः प्रसिद्धः, केचलकः वन्यशिरस्त्राणं, कौचपक इत्यपपाठः । कलमितिका गजोपर्यास्तरणम्, कुलमितिकेति क्वचित् पाठः । सौमितिका कलमितिकैव कृष्णवर्णा गजपर्याणोपर्यास्तरणम्, तुरगास्तरणं प्रसिद्धम्, वर्णकं वर्णकम्बलः, तलिच्छकं कम्बलविशेषः, तल्लिक्थकमित्यपि पाठः । वारबाणः कञ्चुकः, परिस्तोमः कम्बलभेदो विस्तारचित्रः, यो विस्तृतवदवभासते निर्माणवैचित्र्यात् स इति व्याचक्षते, कुथ इति त्वेके । समन्तभद्रकं सन्नाहपट्टः, गजादिजघनत्राणमित्यपरे । चशब्दः समुच्चये । इहाविकाधिकारे पुनराविकमिति वचनं वैचित्र्यार्थम् ।

चाणक्यटीका

शुद्धमिति यथाजातमनाहितवर्णम् । शुद्धरक्तं सर्वरक्तम् । किञ्चिच्छुद्धं किञ्चिद्रक्तमित्येव पक्षमरक्तं यस्योतस्य पक्ष्माणि रक्तानि । त्रिविधं वर्णत आविकम्, क्रियातस्तु चतुर्विधम् । अविचितं सूचीमुक्तम् ( ? ) । वानचित्रं तन्त्रारोपितं कृत्वा नानाप्रकारैर्भक्तिविशेषैरुपेतम् । खण्डसङ्घात्यं खण्डानवयवानुतान् कृत्वा पश्चात् संहृत्य यत् क्रियते । तन्तुविच्छिन्नं तन्तुभिर्विच्छिद्य यदूयत इति ।।

तस्य ( नाम ? वान ) विकल्पानाह—कम्बलकोचैवकौ स्वनाम्नैव प्रतीतौ । विलासिस्त्रीणां कलमिति ( का ) देनवततः ( ? ) । सोमितिका कर्णत्राणम् । तल्लि-

चाणक्यटीका

च्छकं वृत्तास्तरणम्। वारवाणः कञ्चुकः। परिस्तोमः कुथो गजास्तरणम्। समन्त-भद्रं सन्नाहतलपट्टकम् एवं नवविधम् आविक ( विक ) पमेव कार्पासादिभिरमिश्र-मित्यर्थः। क्रियाविशेषस्तेषां ( ख उ ) ताद्यपेक्षाया यथासम्भवमभ्यूह्यः। ननु ( म ? ) कलमितिकायाः किङ्कृतः क्रियाविशेष इतिचेत्, खण्डसङ्घात्ये अन्तर्भावात्। खण्डशब्दस्योपलक्षणार्थत्वाल्लोमसङ्घात्यपि द्रष्टव्यम् ॥

प्रतिपदपञ्चिका

जलचराजिनमाह—सातिनेत्यादि, उद्रो जलचरः प्राणिविशेषः तदीया औद्राः। तत्र सातिना कृष्णा नलतूला नलतूलवर्णा। नलस्तृणविशेषः। तत्तूलं कुसुमपक्ष्म तद्वर्णा। वृत्तपुच्छा कपिला इतिशब्दः प्रकारे। एतेन अनुक्तमपि मार्जारचर्म जायते तद्देशप्रसिद्धा[1] गृहीता द्रष्टव्या।

चर्माण्यभिधाय चर्मगुणानाह—मृद्वित्यादि,

मृदु सुकुमारं स्निग्धमरूक्षं बहुलरोम च श्रेष्ठं भवति। रागभेदेन त्रिविधम्। क्रियाभेदेन चतुर्विधम्। संस्थानभेदेन दशविधमेवं सप्तदशविधव्यालिक-माह—

रागभेदेन तावत् शुद्धं शुक्लं शुद्धरक्तं सर्वं रक्तं पद्मरक्तं[2] एकदेशरक्तमाविलं अवयो रोमोत्थकारिणः पशुविशेषाः तद्रोमभवः। क्रियाभेदाच्चातुर्विध्यमाह—(ख)चित्तं सूचिवानं वानचित्रं वानेनैव चित्रं खण्डसङ्घात्यं पृथग्विरचितावयवम् सङ्घातम्। तन्तुविच्छिन्नम् जालकोपकारि। संस्थानभेदाद् दशविधमाह[3]—कम्बल इत्यादि,

कम्बलः प्रतीतः केचलकः[4] वनगोचराणां शीतवारणं शिरस्त्राणम्। कल-मितिका। गजास्तरणं पर्याणाधस्तान्नीयते सौमितिका। सैव कृष्णवर्णा गजपर्याण-स्योपरि दीयते। तुरगास्तरणं प्रतीतम्। (र)लघुरप्यपदेश इत्यपरे। वर्णकं वर्णकम्बलः तलि धरुतल्पकः। वारबाणः कञ्चुकं। परिस्तोमः विस्तारिका। चित्रा कुथेत्यपरे। समन्तभद्रकं सन्नाहपट्टः गजादिजघनमित्यपरे। चस्समुच्ये। आविकमिति। आविकग्रहणेनानुवर्तमाने खचितवानचित्रखण्डं सङ्घात्यतन्तुविच्छिन्नानि कार्पासका-न्यपि भवन्तीति।

———

१. जातद्देश—पा०

२. पद्गरक्तं—पा०।

३. द्वाराविध्य—पा०

४. कौपचपाकः—पा०

[ तेषु प्रशस्ताः ]

**पिच्छिलमार्द्रमिव च सूक्ष्मं मृदु च श्रेष्ठम् ।**

[ नेपालदेशीयमेषरोमनिर्मित-
वस्त्रभेदाः गुणाश्च ]

**अष्टप्लोतिसङ्घात्या कृष्णा भिङ्गिसी वर्षवारणमपसारकः इति नैपालकम् ।**

---

श्रीमूला

गुणानाह—पिच्छिलमिति । पिच्छिलमिव श्लक्ष्णमिव भासमानम्, आर्द्रमिव च भासमानं, सूक्ष्मं, मृदु च, श्रेष्ठं भवति ।

अष्टेत्यादि । अष्टप्लोतिसङ्घात्या प्रोतय एव प्लोतयः खण्डाः तत्सङ्घातनिष्पन्ना, सा कृष्णा कृष्णवर्णा, वर्षवारणं वृष्टिरोधसाधनभूता च भिङ्गिसी तदाख्यः कम्बलभेदः एकः, अपसारकः काण्डपट इत्यपरः । अनयोर्भेदयोर्गुणात् प्रागनभिधानं गुणासम्बन्धद्योतनार्थम् । इति नैपालकम् अनेन प्रकारेण नेपालदेशभवमाविकं निरूपितमित्यर्थः । नेपालग्रहणाच्च वक्ष्यमाणं मृगरोमादिकमन्यदेशजं सूचितम् ।

चाणक्यटीका

पिच्छिलं यत्र हस्तः स्रंसते । आर्द्रमिव तच्छुष्कं विप्रतिभाति । सूक्ष्ममस्थूलांशुकम् । मृदु च तनु यत्तच्छ्रेष्ठमाविकम् ॥

अष्टप्लोतिसङ्घात्येति सूक्ष्मैरष्टाभिः प्लोतैः पटैरेकीकृतैः सङ्घात्या ( ? ) कृष्णवर्णा नाम्ना ( टिलि ? भिङ्गि ) सीति । अवकरलोम ( भिः ) स्थूलैः संस्कृतः अपसारकः वर्षत्राणं शरीरगृहाच्छादनार्थम्, सूक्ष्मैस्तु वर्षासु ये नश्यन्ति ··धितत्राणार्थैर्वेत्यर्थोक्तम् । एतद् द्वयमपि नेपालदेशजं, नान्यत्रेति ॥

प्रतिपदपञ्चिका

तत्प्रतिषेधार्थं गुणानाह—पिच्छिलमित्यादि, इव प्रत्येकं पिच्छिलमिव पिच्छिलमतिश्लक्ष्णं आर्द्रमिवार्द्रमतिगुरु सूक्ष्मं प्रतनु मृदु सुकुमारं तच्छ्रेष्ठं भवति ।

प्लोतयः खण्डानि तैरष्टाभिः संहताष्टप्लोतिसङ्घात्या कृष्णा कृष्णवर्णादि त्राणं भिङ्गिसी कुटी अवसारकः काण्डवटकः सोऽप्यष्टप्लोतिसङ्घात्य कृष्ण एव यत्र वर्णान्तरमनुपदिष्टं तत्र सर्वत्र शुद्धादिकमनुवर्तते । पिच्छिलादींश्चतुरो गुणानभिधायपश्चाद्भिङ्गिस्यपसारयोरभिधानं वर्षादित्राणव्यवध[1] नैपालकं नेपालविषयजमाविकमुक्तमभिहितमिति । इह (ने)पालग्रहणात् मृगरोमाद्यन्यदेशजं व्याख्यातम् ।

---

१. व्यवधानैकोर्ययोगित्वात् पिच्छिलादिगुणवैयर्थ्यात् इति ।

[ मृगरोमजानि षड्विधानि ]

**सम्पुटिका, चतुरश्रिका, लम्बरा, कटवानकम्, प्रावरकः, सत्तलिकेति मृगरोम ।**

[ दुकूलतद्वाकयोः प्रत्येकं त्रयो भेदाः
भेदान्तराणि च ]

**वाङ्गकं श्वेतं स्निग्धं दुकूलं, पौण्ड्रकं श्यामं मणिस्निग्धम्, सौवर्णकुड्यकं सूर्यवर्णम् । मणिस्निग्धोदकवानं चतुरश्रवानं व्यामिश्रवानं च । एतेषामेकांशुकमध्यर्धद्वित्रिचतुरंशुकमिति ।**

———————

श्रीमूला

षड्विधं मृगरोमजमाह—सम्पुटिकेति । सम्पुटिका जङ्घात्राणं सुक्थणाभिधानमिति क्वचिट्टीकादर्शे लिखितं, सन्थनमित्यन्यत्र लिखितं दृश्यते । चतुरश्रिका दशारहिता नवाङ्गुलिचिह्नितकोणा । लम्बरा प्रच्छदपटविशेषः । कटवानकं स एव स्थूलसूत्रो भाष्यक इति तद्देशीयानां प्रसिद्ध इति स्वामी । प्रावरकः पूर्वोक्त एवान्यतरतोदशो रोमावर्तक इति तद्देशप्रसिद्ध इति स्वामी । सत्तलिका तूलिकाख्य आस्तरणविशेष इति स्वामी । इति मृगरोम अनेन प्रकारेण मृगरोमजमुक्तम् ।

अथ त्रिप्रकारं दुकूलमाह—वाङ्गकमित्यादि । वाङ्गकं वङ्गदेशभवं, दुकूलं, श्वेतं स्निग्धं मसृणम्, पौण्ड्रकं पुण्ड्रदेशभवं, श्यामं, मणिस्निग्धं मरतकस्निग्धम् । सौवर्णकुड्यकं कामरूपस्थे सुवर्णकुड्याख्ये प्रदेशे भवं, सूर्यवर्णम् उद्यदादित्यद्युति । दुकूलस्य वानमपि त्रिप्रकारमाह—मणीत्यादि । मणिस्निग्धोदकवानं नाम दुकूलस्य साधनद्रव्यं जलेनार्द्रीकृत्य मणिबन्धेनावघृष्य वानं, चतुरश्रवानं वर्णान्तरासंसृष्टं शुद्धं वानं, व्यमिश्रवानं कार्पासकतन्तुमिश्रितैः कौशेयकतन्तुभिर्वानम्, अथवा वर्णान्तरसंसृष्टवानम् । चः समुच्चये ।

एतेषामिति । एतेषां दुकूलानां मध्ये, एकांशुकं तानवानयोरेकतन्तुकम्, अर्थात् प्रशस्तं सूक्ष्मत्वात् । अध्यर्धद्वित्रिचतुरंशुकम् अध्यर्धांशुकं द्व्यंशुकं त्र्यंशुकं चतुरंशुकं च, अर्थादपकृष्टमुत्तरोत्तरं स्थूलत्वात् । तत्र यदेकगुणं तन्यते द्विगुणमूयते द्विगुणं वा तन्यते एकगुणमूयते तदध्यर्धांशुकम् । यद् द्विगुणं तन्यते द्विगुणमूयते तद् द्व्यंशुकम् । यत् त्रिगुणं तन्यते त्रिगुणमूयते तत् त्र्यंशुकम् । यच्चतुर्गुणं तन्यते चतुर्गुणमूयते तच्चतुरंशुकम् । इतिशब्दो दुकूलनिरूपणसमाप्तौ ।

चाणक्यटीका

सङ्कुटिका कामगुणघटनात्वादल्पवाटा । सैव समचतुरश्रा चतुरश्रिका । लम्बुवानकम् इन्द्राक्षिकाकृतिवानम् शय्योत्तरच्छदः । कटकवानकं कटकस्येव मण्डि-

चाणक्यटीका

कावानं यस्य । प्रावार इव प्रावारकं पुष्पपटसदृशम्, तदुभयं शीतत्राणार्थम् सतलिका सहान्येन तटपट्टेनास्तरणार्थं व । तूलिकेत्यन्ये । त एते मृगरोमकृताः षड्विधाः पूर्वोक्तरोमक्रिया ( वि ) शेषाः ।।

कुप्यमिदानीं कोशप्रवेशयोग्यमुच्यते—वाङ्गकमिति वङ्गेषु भवम् । पुण्ड्रेषु सुवर्णकुड्ये च भवं प्रभूतं त्रिविधम् मणिस्निग्धं मणिवर्णस्निग्धमित्यर्थः । मणिस्निग्धश्च तदु ( भा ? दक ) वानश्च मणिनावघृष्य स्निग्धं कृत्वा उदकेनार्द्रीकृत्य यदूयत इत्यर्थः । व्यामिश्रं वानं यस्य कौशेयः कार्पासो वारवाणः चतुरश्रवाणं शुद्धदुकूलवानम्, चतुरश्रशब्दस्य निर्व्याज ( व ) वाचित्वात् ।।

एषामेव वाङ्गादीनामपरो विशेषः एकेनैवांशुकेन यदूयते तद् एकांशुकम् इत्यादि योज्यम् । वांशुकन्तु ( ? ) नास्ति दुकूलमिति नोक्तम्, एदद् यथापूर्वं श्रेष्ठम् ।।

प्रतिपदपञ्चिका

तस्य हिमवन्तकोटशम्बरेष्वर्बुदकुन्देष्वेव सम्भवात् तत् षड्विधमाह—सम्पुटिकेत्यादि,

सम्पुटिका सुक्यणाभिधाना जङ्घात्राणार्थं, चतुरस्रिका दशारहिता कोणेषु नवाङ्गुलीचिह्निता शिरस्त्राणार्थं[1] भवति । लम्बरा नाम प्रच्छदपटः कटवानकं स एव स्थूलसूत्रोतोभाम्यकमिति तद्देशीयानां प्रसिद्धः स एवान्यतरो दशो रोमावर्तक इति तद्देशोयानां प्रसिद्धः । सतलिका तूलिकाख्यास्तरणविशेषः द्विपुटं प्रावरणमित्यपरे ।

त्रिविधं दुकूलमाह—वाङ्गकमित्यादि । वाङ्गकं वङ्गेषु भवं, श्वेतं वर्णतः स्निधं (अ) परुषं दुकूलं, सूक्ष्मवल्कलं, पौण्डकं पुण्ड्रेषु भवं श्यामं व (र्ण) तः मणिस्निग्धं मरकतस्निग्धम् । सौवर्णकुड्यकं, कामरूपेषु सुवर्णकुड्ये भवं सूर्यवर्णम् । बालार्कप्रभं त्रिविधमेव । वयनप्रकारमाह—मणिस्निग्धोदकवानं, यदुक्तं दुकूलस्य द्रव्यं तदुदकेनार्द्रीकृत्य मणिना अपघृष्य इति चतुरस्रवानम् । वर्णान्तरासंस्पृष्टं शुद्धं दुकूलवानं व्यामिश्रकवानम् ।

कौशेयकेन कार्पासकेन वा वानं क्षेप्त्रेण तन्यति वीरतेनोयते वीरणेन वा तन्यते क्षेत्रेणोयत इति केचित् । वर्णान्तरव्यामिश्रमित्यपरे । एवं त्रिविधं दुकूलवानं भवति । एतेषां दुकूलानामेकांशुकं एकतनमेकतन्तुकं च सूक्ष्मत्वाच्छ्रेष्ठं भवति । अस्यार्धांशुकं यदेकगुणं तन्यते द्विगुणमूयते द्विगुणं वातन्यते एकगुणमूयते तत् द्व्यर्धांशुकं स्यूलात्थादेकांशुकादवकृष्टं खवति । एवमपरेष्वपि योज्यम् ।

———

१. शीतत्राणार्थम्—पा०

[ पट्टसूत्रभेदाः, तद्योनयः, तद्वर्णाः,
तेषूत्तमादिनिर्देशश्च ]

**तेन काशिकं पौण्ड्रकं च क्षौमं व्याख्यातम् । मागधिका पौण्ड्रिका सौवर्णकुड्यका च पत्रोर्णाः । नागवृक्षो लिकुचो वकुलो वटश्च योनयः । पीतिका नागवृक्षिका, गोधूमवर्णा लैकुची, श्वेता वाकुली, शेषा नवनीतवर्णा । तासां सौवर्णकुड्यका श्रेष्ठा । तया कौशेयं चीनपट्टश्च चीनभूमिजा व्याख्याताः ।**

——————

श्रीमूला

तेनेति । तेन दुकूलगताध्यर्धांशुकत्वादिनिरूपणेन, काशिकं काशिदेशभवं, पौण्ड्रकं च पुण्ड्रदेशजं च, क्षौमं व्याख्यातं क्षौममेव निरूपितम् अध्यर्धांशुकद्व्यंशुकादिरूपं स्थूलं दुकूलमेव हि क्षौममिति व्यपदिश्यत इत्यभिप्रायः ।

मगधपुण्ड्रकसुवर्णकुड्यकाख्यदेशत्रयभवां नगकेसरडहुमद्यगन्धन्यग्रोधाख्यवृक्षचतुष्टययोनिं पत्रोर्णामाह—मागधिकेति । पत्रोर्णाः वृक्षपत्रेषु क्रिमिलालाकृता ऊर्णाः पट्टसूत्रस्य योनयः । तासां योनिभेदनिमित्तं गुणभेदमाह—पर्वतिकेत्यादि । नागवृक्षिका पीतिका नागवृक्षयोनिः पीतवर्णा । लैकुची लिकुचयोनिः । वाकुली बकुलयोनिः । शेषा वटयोनिः ।

मागधिकादीनां पत्रोर्णानां मध्ये श्रेष्ठामाह—तासामित्यादि । तयेति । तया पत्रोर्णया, कौशेयं कोशकारभवं, चीनभूमिजाश्चीनपट्टाश्च चीनदेशभवा वस्त्रविशेषाश्च, व्याख्याताः योनितो वर्णतश्च निर्दिष्टाः, तेऽपि पत्रोर्णावन्नागवृक्षादियोनयः पीतकादिवर्णाश्चेत्यभिप्रायः ।

चाणक्यटीका

तेनेति दुकूलेन काशिषु जातं पौण्ड्रञ्च यत् क्षौमं तद् वर्णतः वानतः अंशुकभेदाच्च व्याख्यातम् ॥

पित्रोर्णा देशतस्त्रिविधा । तत्र मगधभवा ( मागधिका ) । पत्रेषु क्रिमिभिर्या ( प्रमी ? ऊर्णू ) यते सा पत्रोर्णा । वटोद्भवेति वक्तव्ये शेषग्रहणाद् अ ( न्यस्य ? न्या ) अप्येवं प्रका ( रेषु ? रा ) भवति इति ज्ञाप्यते ॥

श्रेष्ठेति इत्यर्थं प्रविशष्ठा ( ? ) इत्यर्थः । देशगतभेदस्तूपदेशाद् बोद्धव्यः । अवभीक्ष्यत्वात्तु नोक्तम् ( ? ) तया पत्रोर्णया कौशेयं कोशकारजन्तुजम् । चीनपट्टः प्रसिद्धः । व्याख्याता इति तेषामपि नागवृक्षादयो व्याख्याता इति । तेषामपि नागवृक्षादयो योनिरित्यर्थः ॥

[ कार्पासिकेषु उत्तमानि ]

**माधुरम् आपरान्तकं कालिङ्गकं काशिकं वाङ्गकं वात्सकं माहिषकं च कार्पासिकं श्रेष्ठमिति ॥**

---

प्रतिपदपञ्चिका

अथ षड्सप्तहस्तादिकं दुकूलपट्टप्रमाणं नियम्य ततोधिककरणादर्ध्यंशुकादि दुकूलप्रकरणेन काशिकं पौण्ड्रकं च तद्देशजम्। क्षौमं स्थूलदुकूलं व्याख्यातम्। वर्णतो वानतोंऽशुकप्रविभागतश्चेति। क्षौमदुकूलयोः स्थूलसूक्ष्मत्वकृतो वा भेद इति।

त्रिदेशजातां चतुर्वृक्षयोनिं पत्रोर्णामाह—तत्र मगधादयः त्रयोदश, नागवृक्षादयश्चत्वारो वृक्षाः। पीतादयश्चत्वारो वर्णाश्च प्रतीताः। पत्रोर्णापट्टसूत्रयोनिः कोशिकाग्रविशेषः। तासां च पत्रोर्णानां सौवर्णकुड्यकाः श्रेष्ठाः तया पत्रोर्णया कौशेयं कौशिकारभवं चीनपट्टाश्चीनविषयोद्भवा वस्त्रविशेषा व्याख्याताः निर्दिष्टाः। तेषामपि नागवृक्षादयो योनयः पीतकादयश्च वर्णा इति।

श्रीमूला

कार्पासिकमाह—माधुरमिति। माधुरं मधुरा पाण्ड्यराजधानी तया पाण्ड्यदेशलक्षणात् पाण्ड्यदेशजमित्यर्थः, आपरान्तकम् अपरान्तः कोङ्कणदेशस्तत्प्रभवं, कालिङ्गकं कलिङ्गभवं, काशिकं काशिजं वाङ्गजं. वङ्गजं, वात्सकं वत्सविषयोद्भवं, माहिषकं माहिष्मती कुन्तलदेशराजधानी तया देशलक्षणात् तद्देशभवमित्यर्थः, यद्वा महिषकदेशोत्पन्नं, चः समुच्चये, कार्पासिकं पाण्ड्यादिदेशसप्तकभवं कार्पासतन्तुजं वस्त्रं, श्रेष्ठम्। इतिशब्दः फल्गुसमाप्तौ। इति फल्गुनिरूपणम्।

चाणक्यटीका

माधुरं दक्षिणमाधुरोत्तरमाधुरभूमिजम्। अपरान्तदेशभवम् आपरान्तकम्। वत्सदेशविषय ( भवं वात्सकम् )। महिषविषये च भवं महिषकम्। कार्पासिकमिति तन्निर्मितं वस्त्रम् श्रेष्ठम् अन्यदेशजेभ्यः॥

प्रतिपदपञ्चिका

[1]माथुरादिसप्तविधं कार्पासिकमाह—माधुकं दक्षिणापथं मथुरोत्पन्नं आपरान्तकं कोङ्कणविषयजं। कलिङ्गकाशिवङ्गाः प्रतीताः। तत्र भवं कालिङ्गकादिकं वात्स्यकं कौशाम्बिदेशजं माहिषं माहिष्मतीदेशजं कार्पासिकं कार्पासविकारः श्रेष्ठमुत्तममिति।

---

१. माधुर पा०। मांधुरं दक्षिणपाथं मधुरोत्पन्नं आपरान्तकम् कोङ्कणविषयजं कलिङ्गकाशीवङ्गाः प्रतीताः।

[ अनुक्तानां समानन्यायत्वोक्त्या निगमनम् ]

**अतः परेषां रत्नानां प्रमाणं मूल्यलक्षणम् ।**
**जातिं रूपं च जानीयान्निधानं नवकमं च ॥८०॥**

---

श्रीमूला

अध्यायान्ते श्लोकावाह—अत इति, पुराणेत्यादि च। अतः अस्मादुक्तात् मौक्तिकादिकार्पासिकान्तात् सप्तदशकात्, परेषामन्येषां, रत्नानां रत्नप्रभृतीनां, प्रमाणं माषकाङ्गुलादिकं तुलामानपौतवदेशकालमानप्रकरणयोर्वक्ष्यमाणं, मूल्यलक्षणं मूल्यं लक्षणं च, तत्र मूल्यं—

"द्वे शते यद् धृतं रत्नं तण्डुलानां प्रमाणतः ।
शतद्वयं सहस्राणां तस्य मूल्यं प्रकीर्तितम् ॥"

इत्युक्तरूपं, लक्षणं प्राशस्त्यं यथा मौक्तिकानां स्थूलनिस्तलादि, अथवा लक्षणम्—

"क्षीरकुम्भे मणिः क्षिप्तो यो रञ्जयति तेजसा ।
शुक्लत्वं चोद्धृतो याति तं शुद्धमिति निर्दिशेत् ॥"

इत्युक्तजातीयं, जातिं मुक्तादीनां ताम्रपर्णिकत्वादिकं रूपं वर्णं षडश्रचतुरश्रादिकं वा, निधानं निधीयमानवस्तवेकान्तगोपनानुकूलं निधानप्रकारं, नवकर्म च आकरोद्धृतमात्रस्य शोधनवेधनघर्षणादिकं ।

चाणक्यटीका

अत इति यथोक्तात् इन्द्रदेशोपदेशात् ( ? ) अन्येषामपि कोशप्रवेश्यानाम्। रत्नानामिति प्रदर्शनार्थत्वाद् रत्नसारफल्गुकुप्यानाम्। प्रमाणं "विंशतितण्डुलं वज्रधरणम्" इत्यादि। मूल्यं गुणवृद्धिहानिक्रमेण। लक्षणं परीक्षा यथा—"क्षीरप्रक्षिप्तमिन्द्रनीलं स्वाभासं जनयति। वत्समुखप्रक्षिप्तं तच्चूषणान्न विक्रियते" इति। जातिम् मणयोऽन्तरजातय इति। रूपं रक्तं भासुरमिति। निधानम् इदमस्मिन् भाण्डे स्थापनीयमिति। इदमत्रोपहितं शोभत इति। अथवा इदं शुभम् अस्मिन् गृहे निधेयम्, अशुभं राष्ट्र इति। नवकर्म च आकरोद्गतस्य घर्षणपेषणादि ॥

प्रतिपदपञ्चिका

साम्प्रतमध्यायप्रान्ते श्लोकमाह—अतः परेषामित्यादि, अतो यथाभिहितान्मुक्तादेः कार्पासिकान्तात् सप्तदशकात् गणात् परेषामप्येषां रत्नादीनां प्रमाणं माषकाङ्गुलादिकं वक्ष्यमाणं वक्ष्यति। विंशतितण्डुलं वज्रधरणमिति। तथा अष्टौ यवमध्या अङ्गुलमध्यमस्य पुरुषस्य मध्यमया अङ्गुल्या मध्यं प्रकर्षो वा अङ्गुलमिति। उक्तं च, कान्तनावकं प्रैयकं (का) च तदुभयमष्टाङ्गुलायामिमित्यादि मूल्यमर्घं तथा च—

पुराणप्रतिसंस्कारं कर्मगुह्यमुपस्करान् ।
देशकालपरीभोगं हिंस्राणां च प्रतिक्रियाम् ॥८१॥

[ इत्यध्यक्षप्रचारे कोशप्रवेश्यरत्नपरीक्षा, एकादशोऽध्यायः ।
आदितो द्वात्रिंशः ]

---

प्रतिपदपञ्चिका

द्वे गते य(भ)द्रकं रत्नं तण्डुलानां प्रमाणतः ।
शीतद्वयं सहस्राणां तस्य मूल्यं प्रकीर्तितम् ॥ इति ॥

लक्षणं प्रशस्तं तद्यथा मुक्तानां स्थूलनिस्तलमित्यादि । मणीनां षडश्रं चतुरस्रं वेत्यादि । अथवा,

क्षीरकुम्भे मणिः क्षिप्तो यो रञ्जयति तेजसा ।
शुक्लत्वं चोद्धृते याति तं शुद्धमिति निर्दिशेत् ॥

जातिरुत्पत्तिस्ताम्रपर्ण्यादि काचमणीनामित्यादि । रूपं षडश्रचतुरस्रादिकं एतत्कोशाध्यक्षो जानीयात् । निधानं सुगोपायनविधि[1] यथा निधीयमानमनाशि भवति । नवकर्म नवकस्याकरोत् । गतस्य कर्म संशोधनवेधनादिकं ।

श्रीमूला

पुराणप्रतिसंस्कारं पुराणस्य असम्भोगातिभोगादिभिर्विवर्णितस्य बन्धच्युतस्य श्लथबन्धस्य वा नवीकरणम् । यदाह—

"अतिभोगादसम्भोगाद् धूमाग्निस्वेदघर्षणात् ।
भूम्यम्बुलवणैश्चापि मुक्तावर्णो विरज्यते ॥"

इति, कर्मगुह्यं कर्मरहस्यं रत्नादीनां वर्णापचारणरञ्जनघर्षणादिकम्, उपस्करान् शाणादीनि रत्नादिकर्मोपकरणानि, देशकालपरिभोगमिति समाहारद्वन्द्वः, तत्र देशकालौ रत्नादीनामुत्पत्तिक्रयविक्रयानुकूलौ, परीभोगः उपयोगः शीतयोर्देशकालयोर्मृगरोमजमुपयोज्यम् उष्णयोः कार्पासिकमित्येवंरूपः, हिंस्राणां क्षौमाद्युपघातकानां मूषिकादीनां, प्रतिक्रियां मार्जारोत्सर्गादिना प्रतिविधानं कृमिमूषिकादिजग्धानां वस्त्रादीनां सीवनादिना संस्करणं च, जानीयात्, अर्थात् कोशाध्यक्षः ।

एषोऽत्र भट्टस्वामिनः सर्वसंङ्ग्रहः—

"मौक्तिकं मणयो वज्रं प्रवालं च समासतः ।
रत्नं चतुर्विधं प्रोक्तं साराः पञ्चविधा मताः ॥
चन्दनागुरुणी श्रेष्ठे मध्यमं तैलपर्णिकम् ।
भद्रश्रीयं च जानीयात् कालेयकमथेतरत् ॥

---

१. संगोपायन पा० ।

श्रीमूला

चर्मा विमृगरोमाणि दुकूलं क्षौमजातयः ।
कार्पासिकं च पत्रोर्णं कौशेयं फल्गु चाष्टधा ॥
कुप्यं कुप्यायुधाध्यक्षप्रोक्तमित्यत्र नोदितम् ।
मुक्ताफलाद्यशेषास्तु भेदाः सप्तदशोदिताः ॥" इति ॥

इति कौटिलीयार्थशास्त्रे अध्यक्षप्रचारे द्वितीयाधिकरणे एकादशोऽध्यायः ।
कोशप्रवेश्यरत्नपरीक्षा, आदितो द्वात्रिंशः ॥

चाणक्यटीका

तथा पुराणानां नष्टवर्णादीनां ( शा ? ले ) पविशेषैर्गुणप्रत्यादानं प्रतिसंस्कारम् । कर्मगुह्यं स्फुटितं तुन्नवायादिकर्म । उपस्करान् शाणशूचीपिप्पलादि । देशकालाः अस्मिन् देशे इदं भुज्यते, काले अस्मिन् इदमुपयुज्यते वर्षेषु कम्वलः हेमन्ते मृगरोम इति । ( परी ) भोगानिति अध उपरि वा भोक्तव्यं नोपवेष्टव्यं वा प्रावृणोतिवेति । हिंस्राणाञ्च मूषिकादीनाम् । प्रतिक्रियां यूपनीरपत्रकृष्णाजितामार्जारस्थान विवयायं पदातिरिति ( ? ) ॥

इति कोशप्रवेश्यरत्नपरीक्षा एकादशं प्रकरणम् ।
एकादशश्चाध्यायः ॥

प्रतिपदपञ्चिका

पुराणप्रतिसंस्कारमिति । पुराणस्यासंभोगादतिभोगादिभिः[1] निश्चायितस्य श्लथीभूतपूर्वनिबन्धनस्य च पुनर्नवीकरणमुक्तम् । हि—

अतिभोगादसंभोगाद् धूमाग्निस्वेदघर्षणात् ।
भूम्यंबुलवणैश्चापि मुक्तावर्णोऽपि रज्यते ॥

कर्मगुह्यमिति, रत्नानां वर्णापचारणरञ्जनघर्षणादिकं तथा कौशेयवल्कलरोमजानामरिकर्दमदष्टकाकपत्रप्रक्षेपादि सर्जिकाक्षारादिभिश्चोदनं उपस्कराङ्क(ल । श । ) णमुष्टिकवेधनयन्त्रादीन् देशकालोत्पत्तेः क्रयविक्रयादेर्वा परिभोगः उपभोगः कथमकरोत । तद्यथा,

शीतप्राये देशे मृगरोम घर्मप्राये तु कार्पासिकमेवं कालेऽपि योज्यं । हिंस्राणां कासारिकादीनां प्रतिक्रिया प्रतिविधानमात्मपरोक्षणं । तत्र प्रक्षेपादि मूपिकाणां मार्जारनकुलोत्सर्गः । ऊष्मोपस्नेहयोरन्यथावस्थानंक्रिमिभूपिकोपहतानां तुन्नवायैः संश्लेषणसंसेवनादि[2] संस्कारकमित्यादि । सर्वसङ्ग्रहस्तु—

मौक्तिकं मणयो वज्रं प्रवालं च समासतः ।
रत्नं चतुर्विधं प्रोक्तं साराः पञ्चविधा मताः ॥

---

१. अतिभोगादिभिः पा० । २. संसीवनादि पा० ।

प्रतिपदपञ्चिका

चन्दनागुरुणी श्रेष्ठं मध्यमं तैलवर्णिकम् ।
भद्रश्रियं च जानीयात् कालेयकमथेतरत् ।।
चर्मापि मृगरोमाणि दुकूलं क्षौमजातयः ।
कार्पासिकं च पत्रोर्णं कौशेयं फल्गु चाष्टधा ।।
कुप्यं कुप्यायुधाध्यक्षप्रोक्तमन्यत्र नोदितम् ।
मुक्ताफलाद्यशेषास्तु भेदास्सप्तदशोदिताः ।।

इति भट्टस्वामिनः प्रतिपदपञ्चिकायां अध्यक्षप्रचारिके द्वितीयेऽधिकरणे,
एकादशोऽध्यायः । कोशाप्रवेक्ष्यरत्नपरीक्षा ।
आदितो द्वात्रिंशोऽध्यायः ।।

# त्रिंशं प्रकरणम्

## द्वादशोऽध्यायः ।

## आकरकर्मान्तप्रवर्तनम् ।

[ लक्षणैस्सहायसम्पत्त्या च आकारस्थानपरीक्षावश्यकता ]

**आकराध्यक्षः शुल्बधातुशास्त्ररसपाकमणिरागज्ञः तज्ज्ञसखो वा तज्जातकर्मकरोपकरणसम्पन्नः किट्टमूषाङ्गारभस्मलिङ्गं वाऽऽकरं भूतपूर्वम्, अभूतपूर्वं वा भूमिप्रस्तररसधातुं अत्यर्थवर्णगौरवं उग्रगन्धरसं परीक्षेत ।**

---

श्रीमूला

आकरकर्मान्तप्रवर्तनमिति सूत्रम् । आकरेषु सुवर्णाद्युत्पत्तिस्थानेषु कर्मान्ताः तदुपलम्भानुकूलाः क्रियाः आकरकर्मान्ताः तेषां प्रवर्तनमनुष्ठापनमाकरकर्मान्तप्रवर्तनम्, तदिहाभिधीयत इति सूत्रार्थः ।

'गुप्तपुत्रदारानाकरकर्मान्तेषु वासयेदि'ति पूर्वमुक्तम् । आकरकर्मान्तास्तु नोक्ताः, त इदानीमुच्यन्त इति सङ्गतिः ।

आकराध्यक्ष इति । शुल्बधातुशास्त्ररसपाकमणिरागज्ञः शुल्बशास्त्रं भूसिराविज्ञानं शाकलादि, अथवा शुल्वं ताम्रं तस्य ताम्ररजतहेमता येनोपदिश्यन्ते तच्छुल्बशास्त्रम्, कनकपञ्चाशीक्रियावादशुल्बशास्त्रमिति स्वामी, धातुशास्त्रं धातुभ्यः सर्जिकागन्धकादियुक्त्या सत्त्वपातनोपदेशकं धातुकौटल्यादिशास्त्रम्, रसः रसबन्धविज्ञानं 'रसोपनिषदाख्यभि'ति स्वामी, पाकः कनकादीनां वर्णकोत्कर्षणाद्यनुकूलमग्निपचनकर्म, मणिरागः मणीनां वर्णभेदोत्पादनकर्म, एषु शुल्बशास्त्रादिषु ज्ञः कोविदः, तज्ज्ञसखो वा शुल्वशास्त्राद्यभिज्ञसहायश्च, तज्जातकर्मकरोपकरणसम्पन्नः तज्जातैस्तन्नित्योद्योगिभिः कर्मकरैः उपकरणैश्च खनित्रभस्त्रासन्दंशशाणयन्त्रादिभिः सम्पन्न उपेतः आकराध्यक्षः, किट्टमूषाङ्गारभस्मलिङ्गं किट्टं लोहमलं मूषा आवर्तनभाण्डम्, अङ्गारो भस्म च लिङ्गं भूतपूर्वत्वचिन्हं यस्य तं तथाभूतं, भूतपूर्वं पूर्वप्रवृत्तविच्छिन्नम्, आकरं परीक्षेत उक्तलिङ्गदर्शनेन जानीयात् । भूमिप्रस्तररसधातुं भूमिर्मृत्तिका, प्रस्तरः पाषाणः, रसः सलिलपारदादिः भूमिप्रस्तररसात्मकाः धातवः सत्त्वप्रकृतयो यस्मिंस्तं भूमिधातुकं प्रस्तरधातुकं रसधातुकं चेत्यर्थः, अत्यर्थवर्णगौरवं वर्णोत्कर्षयुक्तं भारोत्कर्षयुक्तं च, उग्रगन्धरसं तीव्रगन्धयुक्तं तीव्ररसयुक्तं च, अभूतपूर्वम् आकरं वा परीक्षेत नवमाकरं च परीक्षेत, किमाकरगता

श्रीमूला

धातवः उत्कृष्टसत्वा उतापकृष्टसत्त्वा आहो मध्यमसत्त्वा इति तदीयवर्णगुरुत्वगन्धरसानां दर्शनतोलनाघ्राणास्वादनैर्निश्चिनुयादित्यभिप्रायः।

चाणक्यटीका

"आकारप्रभवः कोशः" इति वक्ष्यति[1]। तस्मात् पूर्वोक्तप्रभवस्य आकरस्य कर्मान्तानां प्रवर्त्तनमिति प्रकरणमारभ्यते।

आकाराध्यक्ष इति। शुल्बशास्त्रज्ञः भूमिपरीक्षाशास्त्रज्ञः, इयं भूमिरासन्नोदका अन्तःपरुषा अन्तःशल्या अन्तःशर्क ( रोदि ? राहि ) ता इत्येवमादिविशेषज्ञः। धातुशास्त्रमिति, धीयन्तेऽस्मिन् दधति वा सुवर्णादीनीति धातुः, मृत्तिकापाषाणादिः, तस्य शास्त्रं धातुवादः, तज्जानाति। वक्ष्यमाणरसानां पाकः। मणीनाञ्च रागज्ञः। 'धातुशास्त्रज्ञ' इत्यत्रान्तर्भूतयोरनयोरप्युपादानं कर्मपरिज्ञानप्राधान्यार्थम्, न शास्त्रविज्ञानमात्रादर्थविज्ञानम् अप्रयोगज्ञतयेति। तज्ज्ञसखो वेति। तत्त्वेनात्मन आत्मकल्पानां च ज्ञानम्, ज्ञानमन्तरेण आकरकर्म न सुकरमनेनेति। तथा सत्यपि तज्ज्ञानितद्योगतया तस्मिन्नेव जातैः ध्नमापकखनकादिभिः कर्मकरैः उपकरणैश्च भस्त्रासन्दंशादिभिः सम्पन्नः। किट्टं लोहमलम्। मूषा यत्र आवर्त्यते किट्टादि लिङ्गं भूतपूर्वम्। अनुपलब्धलिङ्गम् अभूतपूर्वम्। तस्यभेदानाह—भूमिविशेषं प्रस्तरविशेषं रसविशेषमेव वा सुवर्णादीनां धातूनां कारणम्। अत्यर्थवर्णम् अतिशुक्लम् अतिकृष्णम्। अत्यर्थगौरवं समानजातिभ्यो गुरुतरम्। उग्रगन्धरसम् अनिष्टगन्धरसमित्यर्थः। परीक्षेत सर्वत आगमेन चक्षुषा स्पर्शेन घ्राणेन जिह्वया च, यदि वा सर्वस्मिन् देशेऽपि ईक्षेत॥

प्रतिपदपञ्चिका

आकरकर्मान्तप्रवर्तनमिति सूत्रम्।

आकरः सुवर्णाद्युत्पत्तिस्थानम्। कर्मान्तास्तत्क्रियारम्भाः तेषां प्रवर्तनम् अनुष्ठापनम्। आकरकर्मान्त प्रवर्तनमिति सूत्रार्थः। सम्बन्धस्तु कोशप्रकृतिः प्रक्रान्ता सन्निधातृनिचयकर्मादिभिः कोश्यप्रवेश्यरत्नपरीक्षान्तैःस्तत्प्रतिपादनार्थमभिधीयत इति सम्बन्धः।

तदाह-आकराध्यक्ष इत्यादि। शुल्बशास्त्रं भूसिराज्ञानं शाकलादि तेनाभूतपूर्वप्रवर्तने कूपखननादिके चोपयोगः। यद्वा, शुल्बं ताम्रं तस्य ताम्ररजतहेमता वा येनोपदिश्यते तत्कनक[2]पञ्चाशत्क्रियावादःशुल्बशास्त्रं धातुज्ञानं धातुभ्यस्सत्वपातनविधायि। धातुकौटिल्याभिज्ञानं रसज्ञानं रसबिन्धविज्ञानं[3] रसोपनिषदाख्यं हस्तकटकादि वा। पाकज्ञानम् वर्णकोत्कर्षादि कौशलं। रसस्य वा पाकः पचनं द्रव्यान्तरयोगेन मारणजारणरञ्जनादिज्ञानं मणीनां नानावर्णोत्पादनज्ञसखः शुल्ब-

---

१. प्रस्तुताध्यायान्ते।

२. पञ्चाशत्—पा०

३. रसबन्धविज्ञानम्—पा०

[ सप्तसु लोहधातुषु स्यन्दनस्थानभेदेन पञ्चविधानां
सुवर्णहेतुरसानां निर्देशः ]

**पर्वतानामभिज्ञातोद्देशानां बिलगुहोपत्यकालयन(नि)गूढखातेष्वन्तः प्रस्यन्दिनः जम्बूचूततालफलपक्वहरिद्राभेदहरितालमनश्शिलाक्षौद्रहिङ्गुलकपुण्डरीकशुकमयूरपत्रवर्णाः सवर्णोदकौषधिपर्यन्ताः चिक्कणाः विशदाः भारिकाश्च रसाः काञ्चनिकाः।**

---

प्रतिपदपञ्चिका

शास्त्राद्यभिज्ञसहायः समुच्चयार्थो वा शब्दः। तज्ज्ञानवतस्तत्सहायस्य च सर्वकर्मसु शक्तत्वात्। तथा च :—

न ह्यशक्तिमतः कश्चित्कार्यारम्भः प्रसिद्ध्यति।
वियता पक्षहीनस्य पक्षिणो गमनं यथा॥ इति।

तज्जाताः तद्योग्याः[1] कर्मकराः सरक-पांसुधावक-लोहकारादयः। उपकरणानि खनित्रभस्त्रासंदंशाधिकरणमुष्टिकादीनि तैस्संपन्नः समेतः किट्टादिभिः लिङ्गैराकारं भूतपूर्वमत्यर्थगौरवादिभिश्चाभूतपूर्वं परीक्षेत। किट्टं लोहमलं, मूषा मृण्मयमावर्तनभाण्डम्, अङ्गारभस्मनी प्रतीते लिङ्गं चिह्नं भूतपूर्वं पूर्वप्रवृत्तं, विच्छिन्नमभूतपूर्वं अभिनवं, भूमिः मृत्तिका, प्रस्तरः पाषाणो, रसः सलिलपारदादिधातुः, सत्त्व प्रकृतिः। स च भूम्यादिभिः प्रत्येकमभिसम्बद्ध्यते। अत्यर्थवर्णम्। उत्कृष्टस्वभाववर्णं चक्षुषा परीक्षेत। अत्यर्थगौरवमतिभारिकं तोलनेन, उग्रगन्धं तीव्रगन्धं घ्राणेन, उग्ररसमत्यर्थकटुकादिरसोपेतमास्वादनेन, इत्येवं चतुर्भिः प्रकारैराकरं परीक्षेत, धातोः सत्वोत्कर्षापकर्षं निरूपयेत्। तत्र भूमिप्रस्तरधात्वोः पश्चादप्युद्दिष्टस्य रसधातोरपि च लता फलरूपसुवर्णैकयोनित्वेन महाफलत्वादल्पप्रयासत्वाचच।

श्रीमूला

भूमिप्रस्तररसधातुषु रसः परनिर्दिष्टोऽप्यव्यभिचरितफलरूपसुवर्णयोनित्वेन महाफलत्वादल्पायासत्वाच्चाभ्यर्हित इति कृत्वा तमेव पञ्चप्रकारं प्रथमं निरूपयति—पर्वतानामिति। अभिज्ञातोद्देशानाम् अभिज्ञाताः पूर्वभूपपरिज्ञाताः आकरविद्याधीता वा उद्देशाः येषां तथाभूतानां, पर्वतानां, बिलगुहोपत्यकालयनगूढखातेषु बिलं भूविवरं। गुहा देवखातगृहम्, उपत्यका शैलासन्नभूमिः, लयनं शिलाटङ्कनकर्मनिर्मितं गृहं। गूढखातं महाशिलापिहितद्वारं बिलम् इत्येतेषु पञ्चसु, अन्तःप्रस्यन्दिनः मध्यप्रस्राविणः, जम्बूचूततालफलपक्वहरिद्राभेदहरितालक्षौद्रहिङ्गुलकपुण्डरीकशुकमयूरपत्रवर्णाः। जम्बूफलादित्रिकं प्रसिद्धं पक्वहरिद्राभेदः शोधितहरिद्राभङ्गः हरितालं

---

1. तद्योगाः—पा०

[ ताम्रादेः सुवर्णत्वापादकरसलक्षणम्, शिलाजतुवैलक्षण्यं च ]

**अप्सु निष्ठ्यूतास्तैलवद्विसर्पिणः पङ्कमलग्राहिणश्च ताम्ररूप्ययोश्शतादुपरि वेद्धारः ।**

---

श्रीमूला

धातुभेदः, क्षौद्रं मधु, हिङ्गुलको रागद्रव्यविशेषः, पुण्डरीकम् सिताम्वुजम् शुकमयूरपत्रे शुकपक्षमपूरपक्षौ, जम्वूफलादीनां दशानां वर्ण इव वर्णो येषां ते तथाभूताः सवर्णोदकौषधिपर्यन्ताः परिसरप्रदेशो येषां ते तथाभूताः, चिक्कणाः स्पृष्टहस्तसङ्गिनः, विशदाः शुचयः, भारिकाश्च गुरवश्च, रसाः, काञ्चनिकाः काञ्चनं सुवर्णं तत्प्रयाजनाः ।

चाणक्यटीका

यस्मात् सर्वत्र भूमिः वसुमती विशेषेणे पर्वतानां विलादिषु शास्त्राल्लोकप्रसिद्धेर्वा प्रख्यातोद्देशानाम् । गुहा ( व्याभावोति ? ) गुहाऽऽकृतिः । उपत्यका नितम्वैकदेशः । लयनं शिला ( गनं ? गृहं ) रचितम् । दृढखातं महाशिलाहितमन्तः—सुषिरम् । महाफलतया प्राधान्याद् रसधातूनाह—अन्तः प्रस्यन्दिन इति । गुहादिष्वन्तः स्रवन् प्रस्यन्दो येषाम् न तु निर्झरवद् वहिर्भूत इति । जम्वूचूतफलानि पक्वानि । हरिद्राभेदाः भग्ना हरिद्राः पोतलोहिता भवन्ति । हरितालादयः प्रसिद्धाः । पुण्डरीकं पद्मम्, शुकपत्रं शुकपक्षः, तत्समानवर्णमुदकं ओषधयश्च येषां समीप इति ते तथोक्ताः । चिक्कणाः स्निग्धाः मधुपितकवद्विसरणे विशदाः । भारिका गुरवः । काञ्चनकरणे प्रभवन्तीति काञ्चनिकाः ।।

प्रतिपदपञ्चिका

विलगुहादि पञ्चाधिष्ठनान्रसानेव तावदाह—पर्वतानामित्यादि[४], अभिज्ञाताः पूर्वनरेन्द्रैः चिन्तिताः । तच्छास्त्रेषु वा परिपठिताः उद्देशाः प्रदेशाः येषामिति । बिलं सुरङ्गाकारादरी भूमिविवरं वा । गुहा देवकृतगृहम् । अश्मगृहकृतम् । उपत्यका पर्वतासन्ना भूमिः, लयनं पौरुषेयं टङ्कोत्पादितगृहम्, गूढखातं महाशिलापिहितद्वारं विलमन्तर्गतगूढनदी वा । एतेषामन्तर्मध्ये प्रस्यन्दिनः जम्बूफलादिदशोपमानवर्णाः जम्बूचूततालानि प्रतीतानि, पक्वहरिद्राभेदः शोधितहरिद्राभङ्गः, हरितालहिङ्गुलकौ पाषाणविशेषौ । क्षौद्रं मधु पुण्डलीकं श्वेतपद्मम्, शुकमयूरयोः पत्रम् तत्पिच्छमेतत् । (सवर्णवर्ण) सवर्णोदकाः तत्तुल्यवर्णोदकाः । तत्सवर्णा ओषधयश्च, पर्यन्ताः समीपप्रदेशाः येषामिति । चिक्कणाः स्पृश्यमाना हस्ता सङ्गिनः, विशदाः तद्विपरीता भारिका गुरवःरसाः शिलाकन्दरादिनिष्यन्दाः, काञ्चनिकाः सुवर्णप्रयोजनाः ।

श्रीमूला

तेषामेव लक्षणान्तरमाह—अप्स्विति । अप्सु निष्ठयूता जले क्षिप्ताः, तैलवद्वि-

---

४. प्रवत्तनामित्यादि—पा०

**तत्प्रतिरूपकमुग्रगन्धरसं शिलाजतु विद्यात् ।**

---

श्रीमूला

सर्पिणः जले तैलवद् विसर्पणशीलाः, पङ्कमलग्राहिणश्च जलगतं पङ्कमादाय कतकवदधोगत्वराश्च, यथोक्ताः काञ्चनिकाः रसाः, ताम्ररूप्ययोरुपरि वेद्धारः ताम्रस्य रूप्यस्य चोपरि क्षिप्ताः सन्तः जात्यन्तरापादकाः सुवर्णत्वापादका इत्यर्थः। वेध्यवेदध्रोः योगपरिमाणमाह—शतादिति। शतमासाद्य, ल्यब्लोपे पञ्चमी, तच्च शतं ताम्ररूप्य योर्वेध्ययोः पलशतं वेद्धुस्तु रसस्य परिमाणम् एकपलात्मकं विशेषाकथनात्, तथा च ताम्रपलशते रूप्यपलशते वा काञ्चनिकरसो वेधशास्त्रविधिनैकपलः क्षिप्तस्तत्सर्वं स्वर्णीकरोतीत्युक्तं भवति। इह वेद्धार इति 'विध विधान इत्यस्मात् तृच्, विधानं च रूपान्तरापादनलक्षणं विवक्षितमिति बोद्धव्यम्।

तत्समरूपगन्धरसे शिलाजतुनि तद्भ्रमापनोदनार्थमाह—तत्प्रतिरूपकमिति। तत्प्रतिरूपकं तस्य काञ्चनिकरसस्य प्रतिरूपकं सदृशरूपं समानवर्णम्, उग्रगन्धरसं तद्वदुग्रगन्धमुग्ररसं च रसवस्तु, शिलाजतु तत्संज्ञं द्रव्यान्तरं, विद्याद् उपयोगादिना परीक्ष्य निश्चिनुयात्। अथवा रूपगन्धरसमात्रसाम्योक्त्या तैलवद्विसर्पित्वपङ्कमलग्राहित्वयोरभावस्य द्योतनात् तेनैव शिलाजतुत्वमवधारयेदित्यर्थः।

चाणक्यटीका

निष्ठ्यूता: क्षिप्ताः पङ्कग्रा (वाः ? हिणः) गुरुत्वात् पङ्कं श्रयन्ति। शतादुपरीति अधिकेनैव एकेन भागेन परेणेत्यर्थः। वेद्धारः सुवर्णस्य कर्त्तारः इत्यर्थः॥

उग्रगन्धरसमिति। न सर्वैर्गुणैः किन्तु गन्धरसाभ्यामेव तत्सदृशं शिलाजतु ज्ञात्वा तदर्थी गृह्णीयात्॥

प्रतिपदपञ्चिका

पुनः परीक्षान्तरमाह—अप्सु, निष्ठयूता जले प्रक्षिप्तास्तैलवद्विसर्पिणः सद्यो—व्यापिनः पङ्कमलग्राहिणः अपरित्यक्तनील पङ्कजमलत्वान्नस्वच्छीभवन्तीत्यर्थः। उदकप्रक्षिप्ता वा तत्पङ्कमलमादाय गुरुत्वादधो गच्छन्तीत्यपरे।

त एवं लक्षणाः स्ताम्ररूप्ययोश्शतादुपरि वेद्धार इति। ताम्रपलशते रुप्यपलशते वा स्वेन विधिना पलकमेकमुपक्षिप्तम् सर्वं काञ्चनीकरोति। शतादिति, पञ्चम्या वेद्धा इति, गुणप्रसारणयोश्च लक्षणं मृग्यम्।

सर्व एवैवं लाक्षणिको रसः। काञ्चनिक इति प्राप्ते तदपवादमाह—तत्प्रतिरूपमिति। तत्तुल्यवर्णमुग्रगन्धरसम् गन्धरसाभ्यामपि समानम्। शिलाजतु विद्यात्। शिलाजतु नाम द्रव्यान्तरमुपयोगान्तरादन्वयव्यतिरेकाभ्याम् अभ्यासवशेन वा जानीयादिति केचित्। अप्सु तैलवदविसर्पणात् पङ्कमलाग्रहणाद्वा विद्यादित्यपरे।

[ ताम्रादेः स्वर्णत्वापादकानां त्रिविधानां भूमिधातुरसधातूनां लक्षणानि, तत्परीक्षाक्रमाश्च ]

**पीतकास्ताम्रकास्ताम्रपीतका वा भूमिप्रस्तरधातवः, भिन्ना नीलराजिमन्तो मुद्गमाषकृसरवर्णा वा दधिबिन्दुपिण्डचित्रा हरिद्राहरीतकीपद्मपत्रशैवलयकृत्प्लीहानवद्यवर्णा वा भिन्नाश्चुञ्चुवालुकालेखाबिन्दुस्वस्तिकवन्तः सगुलिका अर्चिष्मन्तः, ताप्यमाना न भिद्यन्ते, बहुफेनधूमाश्च, सुवर्णधातवः प्रतीवापार्थाः ताम्ररूप्यवेधनाः ।**

---

श्रीमूला

अथ त्रिविधान् भूमिप्रस्तरधातूनाह—पीतका इति । पीतकाः केवलपीताः, ताम्रकाः केवलताम्राः, ताम्रपीतकाः उक्तोभयमिश्राः । वेति विकल्पे, एवं त्रिविधाः, भूमिप्रस्तरधातवः भूमिधातवः प्रस्तरधातवश्च, भिन्ना नीलराजीमन्तः विदारिताः, मध्ये नीलरेखायुक्ताः, मुद्गमाषकृसरवणी वा मुद्गमाषतिलौदनसवणीः । वेति विकल्पे । दधिबिन्दुपिण्डचित्राः दधिबिन्दुचित्राः दधिकणाकारैः सूक्ष्मैर्बिन्दुभिराकीर्णाः दधिपिण्डचित्राश्च दधिपिण्डसदृशैः स्थूलबिन्दुभिराकीर्णाश्च, हरिद्राहरीतकीपद्मपत्रशैवलयकृत्प्लीहानवद्यवर्णाः हरिद्रा रजनी, हरीतकी पथ्या, पद्मपत्रं पद्मदलं । शैवलं जलनीली यकृत्, कालखण्डाख्यो मांसविशेषः, प्लीहा गुल्मः, अनवद्यं कुङ्कुमम् एषामिव वर्णो येषां ते तथाविधाः । भिन्नेषु विशेषमाह—भिन्नाः सन्तः, चुञ्चुवालुकालेखाबिन्दुस्वस्तिकवन्तः चुञ्चुवालुका सूक्ष्मवालुकेति स्वामी । तद्वन्तः लेखा राजयः तद्वन्तः बिन्दुमन्तः स्वस्तिकस्त्रिकोणरेखाविशेषस्तद्वन्तः, सगुलिकाः गुटिकाकारशर्करोपेताः, अर्चिष्मन्तो दीप्तिमन्तः । परीक्षान्तरमाह—ताप्यमानाः सन्तः न भिद्यन्ते न स्फुटन्ति । कीदृशास्तर्हि भवन्तीत्यत्राह—बहुफेनधूमाः बहुफेनाः बहुधूमाश्च भवन्ति । चशब्दः समुच्चये । एवंलक्षणाः भूमिप्रस्तरधातवः, प्रतीवापार्थाः प्रतीवापो नाम वेधनद्रव्यस्यावर्तमाने ताम्रे रूप्ये वा चूर्णीकृत्य प्रक्षेपः तदर्थास्तत्प्रयोजनाः, ताम्ररूप्यवेधनाः ताम्रस्य रूप्यस्य वा स्वर्णत्वापादकाः, अत एव सुवर्णधातवः सुवर्णहेतुभूता धातव इत्युच्यन्त इत्यर्थः ।

चाणक्यटीका

नवा ताम्रपीतका मनश्शिलावद् भूमिधातवः (प्रस्तुतकथातप ? पीतकास्ताम्रकावा ) शुद्धसङ्कीर्णभेदात्त्रिविधाः । तेषां विशेषमाह—भग्ना इति । नीलराजीवन्त इति नीलरेखान्विताः । दधिबिन्दुचित्राः दधिबिन्दुभिरन्तश्चित्राः । यकृत्प्लीहाउभये रागौ । यकृदित्यन्ये कालेयकमाहुः । हरिद्रादीनामिव येषामनवद्यो वर्णः । चूर्णाद्धिविशेषः तद्बीजसदृशानाम् । लेखावन्त इति स्वस्तिकवन्तः स्वस्तिकाकारलेखायुक्ताः । सुगुटिका ( गुटिका ) युक्ताः । सुवर्णधातवः श्वेताः सुवर्णाभा भूमिभेदाः प्रस्तरभेदाश्च । ताम्रवेधनाः प्रतीवापेन स्वशक्त्यपेक्षेण भागेनेति बोद्धव्यम् ॥

[ रूप्यहेतूनां अष्टादशप्रकाराणां धातूनां लक्षणानि ]

**शङ्खकर्पूरस्फटिकनवनीतकपोतपारावतविमलकमयूरग्रीवावर्णाः सस्यक-गोमेदकगुडमत्स्यण्डिकावर्णाः कोविदारपद्मपाटलीकलायक्षौमातसीपुष्पवर्णाः ससीसाः साञ्जनाः विस्राः, भिन्नाः श्वेताभाः कृष्णाः कृष्णाभाः श्वेताः, सर्वे वा लेखाबिन्दुचित्राः मृदवो ध्मायमाना न स्फुटन्ति बहुफेनधूमाश्च रूप्यधातवः ।**

---

प्रतिपदपञ्चिका

भूमिप्रस्तरलक्षणं सुवर्णधातुमाह—पीतका इत्यादि, पीतकाः शुद्धपीताः ताम्राः शुद्धताम्राः ताम्रपीता उभयवर्णा इत्येवं विविधा भूमिधातवः प्रस्तरधातवश्च। मध्येप्येते किमेवंवर्णा एव नेत्याह—भिन्ना विदारिता नीलराजिमन्तो नीललेखाकीर्णाः। मुद्गमाषौ प्रतीतौ धान्यविशेषौ । कृसरस्तिलौदनः तद्वर्णा वा विकल्पे । दधिविन्दुचित्राः दधिवर्णाः ननु[1] वृषदताकीर्णाः दधिपिण्डचित्राः दधिवर्णाः स्थूलविन्दुशवलाः तथा हरिद्रादिसप्तविधवर्णाश्च । तत्र हरिद्रादयः प्रतीताः ।

यकृदुदरान्तर्गतः कालखण्डाख्यो मांसविशेषः तद्वत् । प्लीहा डिम्भः अनवद्य-कुङ्कुमवर्णा तद्वर्णा वा किमेते अभिन्ना अप्येतद्वर्णा एवेत्याह—भिन्ना इत्यादि,

चुञ्चुवालुका सुक्ष्मवालुकेत्युपदेशेन । अन्ये तु चञ्चुवालुकेति पठन्तः चुञ्चुपला-काराः चञ्चुवालुकेति[2] वर्णयन्ति । चूञ्चुच्चाटकिः शाणविशेषः । लेखा राजयः । बिन्दुः प्रतीतः । स्वस्तिको नन्द्यावर्तः । सगुलिकाः निम्बफलाकारशर्करोपेताः अर्चिष्मन्तो दीप्तिमन्त इत्येवं बहिः परीक्षामभिधाय अग्निगतानां[3] परीक्षामाह—

ताप्यमाना इति, ध्मायमाना अभिद्यमानास्ते न स्फुटन्ति[4] । बहुफेनाः बहु-धूमाश्च ताप्यमाना एवमेते सुवर्णधातवः । कथं पुनस्तेषां सुवर्णधातुत्वमित्याह— प्रतीवापार्था इति । प्रतिवापश्चूर्णीकृत्य आवर्तमाने ताम्रे रूप्ये वा तच्छास्त्रोक्तविधिना प्रक्षेपः । तदर्थास्तदेकप्रयोजनाः । ताम्ररूप्यवेधना इति ताम्ररूप्यस्य वा हेतुत्वा-पादनाः ।

श्रीमूला

रूप्यधातूनाह—शङ्खेत्यादि । रूप्यधातवः रूप्यहेतवो धातवः, शङ्खवर्ण-कर्पूरवर्णादयोऽष्टौ सस्यकवर्णगोमेदकवर्णादयश्चत्वारः कोविदारवर्णपद्मवर्णादयः षडित्येवमष्टादशप्रकाराः । तत्र कपोतः आरण्यः कलरवः, पारावतो ग्राम्यः, विमलकः

---

१. ननु ?

२. चुञ्चुवालुकेति—पा०

३. अग्निप्रतानां—पा०

४. न भिद्यन्ते—पा०

[ धातुसामान्ये गुरुत्वानुगुण्येन साराधिक्यम्,
अशुद्धधातुशोधनक्रमश्च ]

**सर्वधातूनां गौरववृद्धौ सत्त्ववृद्धिः ।**

---

श्रीमूला

श्वेतरक्तो मणिः। सस्यको नीलर्मणिः गुडः पिण्डशर्करा, मत्स्यण्डिका शर्करा। कोविदारस्ताम्रपुष्पाख्यो वृक्षः, पाटली अमोघाख्या, कलायः सतोनकः क्षौमं क्षुमाभेदः, अतसी उमाख्या। शेषं प्रसिद्धम्। ससीसाः योगेष्टाख्यलोहानुविद्धाः, साञ्जनाः सीसकवच्छुक्लवर्णमञ्जनमिति स्वामी, तदनुविद्धाः, विस्राः दुर्गन्धाः, भिन्नाः खण्डिताश्चेत्, श्वेताभाः कृष्णाः श्वेतवर्णाः सन्तो मध्ये कृष्णवर्णाः, कृष्णाभाः श्वेताः कृष्णवर्णाः सन्तो मध्ये श्वेतवर्णाः। सर्वे वा वेति विकल्पे शङ्खादिवर्णा अष्टादशविधा अपि। लेखाबिन्दुचित्राः स्ववर्णभिन्नवर्णाभिर्लेखाबिन्दुभिश्च चित्राः, मृदवः, ध्मायमाना न स्फुटन्ति ताप्यमाना न भिद्यन्ते बहुफेनधूमाश्च भवन्ति।

चाणक्यटीका

शङ्खेत्यादि। मत्स्यण्डिका खण्डः। विस्रगन्धाः। कृष्णा भिन्नाः सन्तः श्वेताभाः। श्वेता भिन्नाः कृष्णाभाः। सर्वेवा भिन्ना इत्येव। रूप्यधातवः भूमिभेदाः प्रस्तरभेदाः॥

प्रतिपदपञ्चिका

इत्येवं सुवर्णधातूनभिधाय रूप्यधातूनाह—शङ्खकर्पूरेत्यादि, तत्र शङ्खवर्णादयोऽष्टौ सस्यकवर्णादयश्चत्वारः कोविदारकपुष्पवर्णादयः षडित्येवमष्टादशधा रूप्यधातवः। तत्र शङ्खादयः प्रतीताः। विमलकः श्वेतरक्तो मणिविशेषः। सस्यको नीलः गोमेदको गोपित्ताकारः। मत्स्यण्डिका शर्करा। कोविदारः काष्टाच(व)म्पकः पद्मकलायौ प्रतीतौ। पाटली पाटला। क्षौमं शुक्लपटं अतसी प्रतीता कोविदारादीनां पुष्पवर्णम् ससीसकाः सीसकानुविद्धाः सर्जना सीसकवत् शुक्लवर्णमञ्जनं तदनुविद्धा। विस्रा दुर्गन्धा, भिन्नाः कृष्णास्सन्तो मध्ये श्वेताभाः श्वेतास्सन्तः कृष्णास्सर्वे वाष्टादशप्रकाराः।

शङ्खकर्पूरादिवर्णाभिन्नास्सन्तः तदन्य(स्य)वर्णलेखा चित्रा बिन्दुचित्रा वा मृदवो धात्वन्तरापेक्षया, ध्मायमाना स्तप्यमानाः न स्फुटन्ति न तटतटायन्ते। बहुफेना बहुधूमाश्च रूप्यधातव इति रूप्यहेतवः।

श्रीमूला

सर्वधातूनामिति। सर्वधातूनां सर्वेषामुक्तानां वक्ष्यमाणानां च धातूनां, गौरववृद्धौ गुरुत्वोत्कर्षे सति, सत्त्ववृद्धिः। सत्त्वं धातुगतः सारः तस्य वृद्धिः, भवति।

चाणक्यटीका

गुरुत्ववृद्ध्यन्तर्गता सत्त्ववृद्धिः।

**तेषामशुद्धाः मूढगर्भा वा तीक्ष्णमूत्रक्षारभाविताः राजवृक्षवटपीलुगोपित्तरोचनामहिषखरकर ( भ ) टमूत्र लण्डपिण्डबद्धाः तत्प्रतीवापाः तदवलेपा वा विशुद्धाः स्रवन्ति ॥**

---

प्रतिपदपञ्चिका

सर्वधातूनामिति प्रागुक्तानां भूमिप्रस्तररसानां सुवर्णरूप्यधातूनां वक्ष्यमाणानां च ताम्रादिधातूनां गौरववृद्धौ गुरुत्वोत्कर्षे सत्ववृद्धिः सत्वोत्कर्षो मन्तव्य इति वाक्यशेषः ।

श्रीमूला

अशुद्धानामनभिव्यक्तसत्त्वानां शोधनप्रकारमाह—तेषामिति । तेषां धातूनां मध्ये, अशुद्धाः अशुद्धद्रव्यान्तरसंसर्गदुष्टाः, मूढगर्भा वा स्वदोषादेवाप्रकाशमानसत्त्वा वा धातवः, तीक्ष्णमूत्रक्षारभाविताः तीक्ष्णमूत्रं नरमूत्रमित्येके । गजाश्वगोगर्दभच्छागमूत्रमित्यपरे इति स्वामी । तीक्ष्णक्षारः, कदल्यपामार्गादिभस्म ताभ्यां भाविताः असकृत् सेचनादिना संस्कृताः । राजवृक्षवटपीलुगोपित्तरोचना महिषखरकरभमूत्रलण्डपिण्डबद्धाः राजवृक्षः शम्याकः, वटः प्रसिद्धः, पीलुर्गुडफलाख्यो वृक्षः, गोपित्तरोचना गोपित्तं गोरोचना च, महिषखरकरभमूत्रलण्डं सौरिभगर्दभबालोष्ट्राणां मूत्रपुरीषम् एतैः पिण्डबद्धाः राजवृक्षादिकल्कैर्महिषादिमूत्रलण्डेन च सह मिश्रितैरुक्ततीक्ष्णमूत्रक्षारभावितस्यात्मनश्चूर्णैर्बद्धपिण्डा इत्यर्थः, तत्प्रतीवापाः राजवृक्षादिचूर्णकृतप्रतीवापाः तदवलेपा वा तच्चूर्णकृतोपलेपा वा सन्तः, विशुद्धाः द्रव्यान्तरसंसर्गजदोषनिर्मुक्ताः, स्रवन्ति मूढगर्भतापहानेन सत्त्वमुद्गिरन्ति ।

चाणक्यटीका

तेषां यथोक्तैर्गुणैः परीक्षितानां ये केचिदन्यलोहसंसर्गाद् अशुद्धाः, शुद्धत्वे वा पृथक्भाभि ( ? भूताभि ) र ( थ ? ) विस्राविणो मूढगर्भाः । तेषां प्रतिक्रियोच्यते । हस्त्यादीनां तीक्ष्णेन मूत्रेण अपामार्गकदलीमोक्षकादीनां तीक्ष्णेन क्षारेण पौनःपुन्येन वासिताः पश्चाद् राजवृक्षादिभिः संयुक्तैः पिण्डीकृतैरन्तः प्रक्षेप्य वेष्टिताः तत्प्रतीवापाः तदनुलेपात् त्रिविधेन कल्केन शुद्धा भवन्ति स्रवन्ति च ॥

प्रतिपदपञ्चिका

तेषामिति, सर्वधातूनामशुद्धधात्वन्तरसम्पर्कात् मूढगर्भा वा स्वदोषेण सत्वममुञ्चतः प्रतिविधेया इत्याह—तीक्ष्णमूत्रक्षारभाविता इति ।

तीक्ष्णं नरमूत्रम् हस्त्यश्वगोजावित्वरेषु मूत्रमित्यपरे । तीक्ष्णक्षारः कदल्यपामार्गदेवताली(हि)विवाकुचि(चु)कायवतिलादि भस्म तद्भाविता असकृत्पायिता राजवृक्षं किरिकालकः[1] वटादिगोपित्तान्ताः गोरोचना महिषखरकर(ट)भाषाणां मूत्रलण्डं मूत्र-

---

१. चिरिकालकः—पा०

[ सुवर्णरूप्ययोः मार्दवोपजनकप्रकारद्वयम्,
मार्दपविलोपनप्रकारश्च ]

**यवमाषतिलपलाशपीलुक्षारैः गोक्षीराजक्षीरैर्वा कदलीवज्रकन्दप्रतीवापो मार्दवकरः ।**

**मधुमधुकमजापयः सतैलं**
**घृतगुडकिण्वयुतं सकन्दलीकम् ।**

---

प्रतिपदपञ्चिका

पुरीषं तेन पिण्डबन्धा धातुद्रव्यमूत्रक्षारभावितं चूर्णीकृत्य राजवृक्षादि द्रव्यकल्केन सहबद्धपिण्डा तत्प्रतीवापास्तच्चूर्णदत्तप्रतीवापाः तदवलेपा भूमयः तत्कल्कोपदेहाः शुद्धा (म) मुक्तधात्वन्तर[1] सम्पर्कदोषाः स्रवन्ति ।

स्वमूढगर्भत्वदोषं च उत्सृज्य सत्वं मुञ्चन्ति । तथा वक्ष्यमाणमपि यवमाषतिलेत्यादिकमशुद्धमूढगर्भाणां पूर्ववत् पिण्डबन्धादिप्रकारैः प्रतिकृते सत्वमालक्षयति-कठिनस्य[2] मृदुकरणमित्यपरे ।

श्रीमूला

यवमाषतिलपलाशपीलुभस्मभिगोक्षीराजक्षीरैश्च सम्मिश्रिताभ्यां कदलीकन्दवनसूरणकन्दाभ्यां प्रतीवापात् स्वर्णरुप्ययोर्मार्दवमुपजायत इत्याह—यवमाषेत्यादि । इह वेत्यन्तस्य विशुद्धाः स्रवन्तीत्यनेन सम्बन्धं मत्वा यवक्षारादिभिः साधनैः पूर्ववत् पिण्डबन्धनादिविधया वा धातवो विशुद्धाः स्रवन्तीत्यर्थं केचिद् वर्णयन्ति ।

चाणक्यटीका

यवमाषादिभिर्विलेपविकल्पः । गोक्षीरेण वा यवक्षारादीनामसंसर्गार्थं पृथक्करणम् । कन्दली श्वेतक्षेत्रे भवति । वज्रकन्दश्च ( मंहं ? ) प्रतीतः मार्दवकरः ।।

प्रतिपदपञ्चिका

यवमाषतिलादयः प्रतीताः । कन्दली घनागमोद्भेदिनी[3] कन्दलीतुल्यपत्रा विज्रकन्दो विष्णुकन्द इति केचित् । सुरभीत्यपरे । वनसूरण इत्यन्ये । एवं यवादिक्षारं तद्भस्म गोक्षीरं, कन्दलीवज्रकं द्वौ च मिश्रीकृत्य तत्प्रतिवापात् कठिनमपि हेमतारं मृदु भवति ।

श्रीमूला

मृदुकरणप्रकारान्तरं श्लोकेनाह—मधुमधुकमिति । सतैलं, घृतगुडकिण्वयुतं

---

१. ममुक्त—पा०
२. कनेस्य अनेकस्य—पा० ?
३. परागमोद्भेदिनी—पा०

**यदपि शतसहस्रधा विभिन्नं**
**भवति मृदु त्रिभिरेव तन्निषेकैः ॥८२॥**

**गोदन्तशृङ्गप्रतीवापो मृदुस्तम्भनः ।**

[ ताम्रसीसत्रपूणां हेतुभूताः धातवः, तद्वर्णाश्च ]

**भारिकः स्निग्धो मृदुश्च प्रस्तरधातुर्भूमिभागो वा पिङ्गलो हरितः पाटलो लोहितो वा ताम्रधातुः ।**

---

श्रीमूला

सर्पिश्शर्करासुराबीजसहितं, सकन्दलीकं कच्छजझाटभेदयुक्तं, यत्, मधु क्षौद्रं, मधुकं यष्ट्याख्यम्, अजापयः छागीक्षीरं च, त्रिभिरेव, तन्निषेकैः निषेको नाम स्वर्णादावौषधकल्कनिक्षेपः मध्वाद्यष्टककल्कनिक्षेपैः, शतसहस्रधा विभिन्नमपि नानाप्रकारकाठिन्ययुक्तमपि स्वर्णादिकं मृदु भवति ॥

चाणक्यटीका

भावितानां विभिन्नं स्फुटितम् । मृदु भवति मध्वादिनिषेचितः ॥

प्रतिपदपञ्चिका

अन्यन्मृदुकरणमाह—मधु मधुकेत्यादि, मधु क्षौद्रं मधुकं यष्टिमधुकं किण्वं सुराकरणद्रव्यम् । अन्ये तु गलचूर्णयुतमिति पठन्तश्चिक्कणगुणप्रतिषेधमाचक्षते—शेषं सुबोधम् । निषेको विकृतस्य सुवर्णादेरुपरि औषधकल्कनिक्षेपः । मृदुस्तम्भनमाह—

श्रीमूला

मार्दवापायकरमाह—गोदन्तेत्यादि । गोदन्तशृङ्गप्रतीवापः गोर्दन्तशृङ्गचूर्णयोर्द्रुतसुवर्णाद्युपरि प्रक्षेपः, मृदुस्तम्भनः मार्दवविलोपनो भवति इति स्वर्णरूप्यधातुप्रकरणम् ।

अथ ताम्रधातुमाह—भारिक इति । भारिकः गुरुः, स्निग्धो मसृणः, मृदुश्च, प्रस्तरधातुः पाषाणधातुः, भूमिभागो वा भूमिधातुर्वा, ताम्रधातुः ताम्रयोनिर्भवति । तस्य चतुर्विधान् वर्णानाह पिङ्गलः कपिलः हरितो नीलः, पाटल ईषद्रक्तः, लोहितो वा रक्तो वा ।

चाणक्यटीका

मृदुस्तम्भन इति मृदुत्वेन अकर्मण्यस्य स्तम्भनकर इत्यर्थः ॥ कर्बुरवर्णः शबलवर्ण इत्यर्थः ।

प्रतिपदपञ्चिका

गोदन्तेत्यादि, गोदन्तं गोशृङ्गं चूर्णीकृत्य द्रवीभूतसुवर्णे तत्प्रक्षेपो मृदुस्तम्भनः । घनत्वापादनः । अत्र गोशब्देन केचित्सम्प्रदायाच्छागमाचक्षते ।

**काकमेचकः कपोतरोचनावर्णः श्वेतराजिनद्धो वा विस्रस्सीसधातुः।**
**ऊषरकर्वुरः पक्वलोष्टवर्णो वा त्रपुधातुः।**

[ अयोवैक्रन्तकयोः हेतुभूताः धातवः,
मणिधातवश्च ]

**कुरुम्बः पाण्डुरोहितस्सिन्दुवारपुष्पवर्णो वा तीक्ष्णधातुः। काण्डभुजपत्रवर्णो वा वैक्रन्तकधातुः।**

---

प्रतिपदपञ्चिका

इत्येवं सुवर्णरूप्यधातूनभिधाय ताम्रधातूनाह—भारिक इत्यादि, तत्र भारिकादयः प्रतीताः, प्रस्तरधातुः पाषाणधातुः, भूमिभागो मृद्धातुः वा विकल्पे। साम्प्रतं चतुरस्ताम्रधातुवर्णानाह—पिङ्गल इत्यादि, पिङ्गलः कपिलः हरितो नीलः पाटलः पाटलीपुष्पाभः लोहितो रक्तः ताम्रधातुः ताम्रयोनिः।

श्रीमूला

सीसधातुमाह—काकेत्यादि। काकमेचकः काक इव कृष्णः, कपोतरोचनावर्णः कपोतवर्णो गोरोचनावर्णश्च, श्वेतराजिनद्धः धवललेखाबहुलः, विस्रो वा दुर्गन्धो वा, सीसधातुः सीससंज्ञलोहयोनिर्धातुर्भवति।

त्रपुसंज्ञस्य शुक्लसीसस्य योनिं धातुमाह—ऊषरेत्यादि। ऊषरकर्वुरः ऊषरदेशवदापाण्डुः, पक्वलोष्टवर्णो वा, त्रपुधातुः।

अयोधातुमाह—कुरुम्ब इति। कुरुम्बः श्लक्ष्णपाषाणप्रायः इति स्वामी, पाण्डुरोहितः श्वेतरक्तः सिन्दुवारपुष्पवर्णो निर्गुण्डोपुष्पवर्णः, वेति विकल्पे, तीक्ष्णधातुः तीक्ष्णम् अयः तद्योनिर्धातुर्भवति।

वैक्रन्तकधातुमाह—काकाण्डेत्यादि। काकाण्डभुजपत्रवर्णो वा काकाण्डवर्णो भूर्जपत्रवर्णो वा, क्वचिद् भूर्जेत्येव पाठः। काण्डेति पाठे काण्डो वृक्षजातिविशेष इति व्याख्येयम्। वैक्रन्तकधातुः वैक्रन्तकाख्यलोहविशेषयोनिर्धातुः। कांस्यादिकं तु तमरकादियुक्तताम्रादिनिष्पाद्यमिति तस्य न धात्वन्तरमस्ति। एवं लोहधातवः सप्ताभिहिताः।

चाणक्यटीका

सीसधातुस्त्रपुधातुः। प्रस्तरो भूमिभागो वेति वर्त्तते॥

मुरवः[1] पाषाणविशेषः। वैक्रन्तधातुरच्छलोहस्य धातुरित्यर्थः। वैक्रन्तको हि वारकुश( ? बर्बरकू )ले चोनदेशे वा समुत्पद्यते। सुवर्णादिलोहानां सप्तानां धातवोऽभिहिताः।

वृत्तलोहन्तु ताम्रकाप्यसंसर्गात्, काप्यमपि त्रपुसंसर्गादिति पृथङ् नोच्यते॥

---

१. 'कुरुम्ब' इति भट्टस्वामी, 'सुरुम्ब' इति केरलभाषाटीका, 'मुरुम्ब' इति रसोपनिषत्।

**अच्छः स्निग्धः सप्रभो घोषवान् शीततीव्रस्तनुरागश्च मणिधातुः ।।**

---

प्रतिपदपञ्चिका

सीसधातुमाह—काकमेचक इत्यादि, काकमेचकः काक इव कृष्णवर्णः कपोतवर्णः प्रतीतः रोचनावर्णः गोरोचनावर्णः श्वेतराजिनद्धः शुक्ललेखाबहुलः। विस्रो दुर्गन्धः सीसाख्यलोहहेतुः । त्रपुधातुमाह—ऊपरकर्बुर इति, उपरवदापाण्डुरक्तः[1] पक्वलोष्ठवर्णः अयं च त्रपुधातुः त्रपुणः शुक्लसीसस्य धातुः कारणम् ।

तीक्ष्णधातुमाह—कुरुम्ब इत्यादि, कुरुम्बः श्लक्ष्णपाषाणप्रायः, पाण्डुलोहितः प्रतीतः, सिन्दुवारपुष्पवर्णे निर्गुण्डीकुसुमवर्णः। तीक्ष्णधातुः अयोधातुः। वैकृन्तकधातुमाह—काण्डमित्यादि। काण्डं समुद्रान्तरक्तम्। वल्लीफलं भूर्जपत्रम्। भूर्जामिधानो वृक्षः तत्फलवर्णं वैकृन्तकं लोहविशेषः। तथा च—

वैमल्ययुक्तं[2] भिदुरं सितं च वैकृन्तकं नभोलोहविकर्तनं च।
तद्धातुवादेन सह, धनं च शस्त्रे च शस्त्रं प(क)चिदैव सूच्ये[3] ।

ताम्रादिभ्य एव संयोगविशेषे कांस्यवृत्तलोहादीनां निष्पत्तिरतस्तेषां पृथक् धात्वन्तराभावात् इहानभिधानमिति ।

श्रीमूला

अथ मणिधातूनाह—अच्छ इति । अच्छो बिम्बग्राही, स्निग्धो मसृणः, सप्रभः सद्युतिः, घोषवान् अग्नितापने टङ्कच्छेदने च महाशब्दः, शीततीव्रः अतिशीतस्वभावः अग्नेरपनयने क्षिप्रशीतो वा, तनुरागः अल्परागः, मणिधातुः मणियोनिर्धातुर्भवति। इयमत्र सङ्ग्रहार्या—

"कनकं रूप्यं ताम्रं सीसं त्रपु तीक्ष्णकं च वैकृन्तम्।
मणयोऽष्टौ निर्दिष्टा अष्टानां धातवोऽप्यष्टौ ।।" इति ।

चाणक्यटीका

अच्छोऽन्तर्गतस्याप्यवसायात्। घोषवानभिहन्यमानः। शीतः स्पर्शगतः। तीव्रतरराग: लोहितादित्यस्य रागेणोपदिग्धः मणिधातुः प्रस्तरो भूमिभागो वा ।।

प्रतिपदपञ्चिका

एवं सप्तप्रकारान् धातूनभिधाय मणिधातूनाह—अच्छ इत्यादि । अच्छः येन व्यवहितमपि द्रव्यान्तरमुपलभ्यते । स्निग्धः स्नेहार्द्र इव लक्ष्यते। सप्रभो दीप्तिमान्

---

१. ऊषरवद्पाण्डुरक्तः—पा०

२. वैमल्ययुक्तं विदुरं सितं च वैकृन्तकंलोह विकर्तनं च।
तद्धातुवादे रस साधनं च शस्त्रे च शस्त्रं क्वचिदेव पक्वम् ।।

३. 'यच्चिदेव'श्ल शुद्धं प्रतिभाति ।

[ आकरोत्पन्नद्रव्याणां सदुपयोगविधिः,
आकरकर्मणां प्रवर्तनक्रमश्च ]

**धातुसमुत्थितं तज्जातकर्मान्तेषु प्रयोजयेत् ।**

**कृतभाण्डव्यवहारमेकमुखम्, अत्ययं चान्यत्र कर्तृक्रेतृविक्रेतृणां स्थापयेत् । आकरिकमपहरन्तमष्टगुणं दापयेदन्यत्र रत्नेभ्यः ।**

---

### प्रतिपदपञ्चिका

घोषवान् । ध्मायमानो महाघोषः टङ्कादिभिः विच्छिद्यमानो वा शीततीव्रः अग्नेरपनीतश्शीघ्रं शोतो भवति । स्वतोऽतिशीत इत्यपरे । तनुरागः स्वल्परागः मणिधातुः काचफलहेतुः । तथा च—कनकं रूप्यं ताम्रं सीसं त्रपु तीक्ष्णकं च । वैकृतं मणयोऽष्टौ निर्दिष्टाः । अष्टानां धातवोऽप्यष्टौ ।

### श्रीमूला

इत्थं धातुपरीक्षामुपदिश्य तत्कर्मान्तप्रवर्तनमधिकृत्याह—धातुसमुत्थमिति । धातुसमुत्थितमित्यपि पाठः । धातुभ्यः स्वल्पधनव्ययप्रयत्नेन प्रथममुत्पन्नं स्वर्णादिद्रव्यं, तज्जातकर्मान्तेषु धातुसम्बन्धकर्मस्थानेषु स्वर्णरूप्याद्याकरेषु, प्रयोजयेत् विनियुञ्जीत बहुतरोत्पत्त्यर्थम् । विनियोज्यस्य धातुसमुत्थत्ववचनं पूर्वपूर्वसम्यक्प्रवृत्तिफलोपलम्भे सत्येवोत्तरोत्तरप्रवृत्तिः कार्येति द्योतयितुम् ।

कृतेत्यादि । कृतभाण्डव्यवहारं घटितसुवर्णादिभाण्डविक्रयम्, एकमुखम् एकद्वारकमेकविक्रयस्थानकं, स्थापयेत् प्रख्यापयेत् । अन्यत्रकर्तृक्रेतृविक्रेतृणां स्थापितान्यदेशे भाण्डक्रियाक्रयविक्रयकारिणाम्, अत्ययं च दण्डं च 'पञ्चविंशतिपणमत्ययं चान्यत्रकर्तृक्रेतृविक्रेतृपरीक्षितृभ्य' इति लक्षणाध्यक्षोक्तं, स्थापयेत् । दण्ड इह द्रव्यसारतारतम्यापेक्षः शुल्काध्यक्ष—धर्मस्थीयकण्टकशोधनोक्तोऽपराधानुरूपः कल्पनीयः प्रमाणाकथनादिति केचित् ।

आकरिकमिति, अपहरन्तम् आकराद् द्रव्यं हरन्तं, आकरिकम् आकरकर्मकरम्, अष्टगुणम् अपहृतद्रव्याष्टगुणमत्ययं दापयेत् । तत्रापवादमाह—अन्यत्र रत्नेभ्य इति । रत्नापहारे तु नायं दण्डः, किन्तु घातो वक्ष्यते ।

### चाणक्यटीका

धातुसमुत्थं सुवर्णादि तत्करणसंस्कारकुलानां सुवर्णकारादीनां कर्मान्तेषु प्रयोजयेद् भाजनशस्त्रालङ्कारार्थम् ॥

( अ ? ) कृतभाण्डानाञ्च विक्रयादिव्यवहारम् । एकमुखम् एकायत्तम् । अत्ययञ्च विनयद्रव्यजातिप्रमाणापेक्षया यथार्हं वक्ष्यमाणप्रमाणापेक्षं वा । अन्यत्रेति निर्दिष्टस्थानात् । कुर्वतां क्रीणतां विक्रेतृणाञ्च स्थापयेत् ॥

**स्तेनमनिसृष्टोपजीविनं च बद्ध्वा कर्म कारयेत्, दण्डोपकारिणं च ।**

---

चाणक्यटीका

आकरिकम् आकराध्यक्षम् । धातुकर्मान्तोद्भवम् अपहरन्तमित्यर्थः । अष्टगुणमपहृत( द्रव्यस्य ) अन्यत्र रत्नेभ्य इति । रत्नापहारे तु वध एव दण्डोऽन्यत्रोक्त इति ॥

प्रतिपदपञ्चिका

सुवर्णादीनामुत्पत्तिमभिधाय विनियोगप्रकारमाह—धातुसमुत्थमित्यादि । धातुसमुत्थमाकरोत्पन्नं सुवर्णादिद्रव्यं तज्जातकर्मान्तेषु सुवर्णाद्याकरेषु प्रयोजयेत् । प्रभूततरोत्पत्तये विनियोजयेत् ।

अथवा तज्जाताः, तज्जातीया निपुणास्तैरधिष्ठिताः कर्मान्तास्तज्जातकर्मान्तास्तेषु दृष्टप्रत्ययात् प्रयोजतेत् ।

कृतभाण्डव्यवहारमिति, ईषद्घटिताघटितभाण्डसुवर्णादिक्रयमेकमुखमेकापणमस्मिन्नेव प्रदेशे क्रयविक्रयादिकं कर्तव्यमिति ।

कृतनियममत्ययं दण्ड्यादन्यत्र कर्त्रादीनां स्थापयेत् । श्रावयेत्तत्र दण्डप्रमाणस्य अनभिधानात् वक्ष्यमाणलक्षणाध्यक्षाभिहितपञ्चविंशतिपणत्ययं चेति । पञ्चविंशतिपणाः इत्ययं स्थापयेदिति केचित्द्रव्याणां सारासारापेक्षया शुल्काध्यक्षधर्मस्थीयकण्टकशोधनोक्तापराधानुरुपो दण्डः कल्पनीय इत्येव । तत्प्रमाणानभिधानमित्यपरे । अन्यत्र कर्ता तदाकरादन्यत्र धातुभ्यस्सुवर्णादियायिता । क्रेतृविक्रेतारौ प्रतीतौ ।

श्रीमूला

स्तेनमिति । स्तेनम् आकरिकमनाकरिकं वा चोरम्, अनिसृष्टोपजीविनं च विना राजानुमतिं धातुवादविद्यया वृत्तिं वर्तयन्तं च बद्ध्वा निगडितं कृत्वा, बद्धमिति पाठेऽप्ययमेवार्थः । कर्म आकारव्यापारं, कारयेत् । दण्डोपकारिणं च महापराधेषु प्राड्विवाकनिर्णीतो देहदण्डप्रतिनिधिर्धनदण्डो देहपीडापरिहार्थत्वादपराधिनं प्रति उपकारो भवतीति दण्डोपकारः स उच्यते तद्वन्तं च अर्थाददत्तदण्डं, बद्ध्वा कर्म कारयेत् ।

चाणक्यटीका

स्तेनम् आकरेऽन्यत्र वा । अनिसृष्टोपजीविनम् अननुज्ञातमाकरम् अन्यद्वा स्वयमुपजीवन्तम् । कर्म कारयेत् आकरेष्वेव । दण्डोपकारिणश्चेति । दण्डं हिरण्यं दातुमसमर्था ये केचिद् दरिद्रत्वात्, तानपीत्यर्थः ॥

ननु च दासकर्मकरकल्पे वक्ष्यत्येव "दण्डप्रणीतः कर्मणा तमुपनयेत्" ( अधि० ३. अध्या० १३ ) इति । सत्यमेवम् । अन्यकर्माणि चरितार्थानामन्यतरकर्माणि । अथवा वधार्हाः सन्तो ये दण्डेनोपचिकीर्षिताः तानाकरेष्वित्यर्थः ॥

प्रतिपदपञ्चिका

आकरिकमाकरनियुक्तकर्मकरादिकं किञ्चिद्द्रव्यजातमपहरन्तमष्टगुणं दापयेत् । अन्यत्र रत्नेभ्य इति । रत्नापहारे तु घातं वक्ष्यति ।

२८

**व्ययक्रियाभारिकमाकरं भागकेन प्रक्रयेण वा दद्यात्, लाघविकमात्मना कारयेत् ।**

[ लोहोत्पादनतत्क्रयविक्रयाणां
लोहाध्यक्षकर्तव्यता ]

**लोहाध्यक्षः ताम्रसीसत्रपुवैकृन्तकारकूटवृत्तकंसताललोहकर्मान्तान् कारयेत् । लोहभाण्डव्यवहारं च ।**

---

प्रतिपदपञ्चिका

स्तेनं तस्करम् । आकरिकमनाकरिकं वा अष्टगुणदण्डदानासमर्थम् अनिसृष्टोपजीविनमननुज्ञातधातुवादव्यवहारिणं बद्ध्वा निगडसंयुतं कृत्वा ध्मानादि कारयेत् । भाण्डोपकारिणश्च सङ्ग्रहणाद्युपक्रोशगृहीतान् तद्दण्डदानासमर्थान् बद्ध्वा कर्म कारयेत् । चः समुच्चये ।

श्रीमूला

व्ययक्रियेत्यादि । व्ययक्रियाभारिकं व्ययक्रिययोर्भारिकं गुरुं गुरधनव्ययसाध्यं गुरुप्रयत्नसाध्यं चेत्यर्थः, आकरं, भागेन् दधाद्व्ययलाभभागव्यवस्थया परेषां प्रतिपादयेत् । प्रक्रयेण वा दद्यात् । अस्याकरस्यैतावत् सुवर्णादिकम् राजार्थे देयमिति परिपण्य वा परेषां दद्यात् लाघविकं लघुव्ययसाध्यं लघुश्रमसाध्यं चाकरम्, आत्मना कारयेत् स्वयं व्यापारयेत् ।

अथावान्तराध्यक्षव्यापारमाह—लोहाध्यक्ष इति । लोहाध्यक्षः सुवर्णरूप्ययोर्वक्ष्यमाणत्वात् तदतिरिक्तं ताम्रादिकमिह लोहः तदध्यक्षः, ताम्रसीसत्रपुवैकृन्तकारकूटवृत्तकंसताललोहकर्मान्तान् आरकूटो रीतिः, वृत्तं तदाख्यो लोहः कंसो घोषाख्यः तालः, कांस्यं सातिशयनादयुक्तं वाद्योपयोगि लोहः कालायसं ताम्रादीनां कर्मान्तान् तद्भाण्डघटनकर्माणि कारयेत् लोहभाण्डव्यवहारं च ताम्रादिनिर्मितभाण्डक्रयविक्रयव्यवहारं च कारयेत् ।

चाणक्यटीका

व्ययक्रियाभारिकमिति व्ययेन भारिकं महाव्ययम् । क्रियया च भारिकं देशादिदोषाद् दुष्करतरम् । भागेन पञ्चमेन षष्ठेन वा । प्रक्रयेण क्लृप्तेन इयता हिरण्येनायं भुज्यतामिति । अन्येभ्यश्चेति[1] षड्भ्यो दापयेद् अध्यक्षो राजेत्यर्थः । लाघविकं व्ययक्रियाभ्याम् । आत्मना कारयेत् ॥

लोहाध्यक्षः ताम्रादिलोहानाम् एतद्विकाराणाञ्च भाण्डानां निष्पत्तिं कारयेत् । आरकूटं रीतिका । लोहव्यवहारञ्चेति पूर्वोक्तमेकमुखमित्याद्यपेक्षणीयम् ॥

---

१. "अन्येभ्यश्च षड्भ्यो दापयेदध्यक्षः" इति टीकानुसारो पाठः स्यात् ।

[ विविधप्रमाणयोगेन नाणकादिनिर्माणस्य
टङ्कशालाध्यक्षकर्तव्यता ]

**लक्षणाध्यक्षः चतुर्भागताम्रं रूप्यरूपं तीक्ष्णत्रपुसीसाञ्जनानामन्यतमं माषबीजयुक्तं कारयेत्, पणमर्धपणं पादमष्टभागमिति, पादाजीवं ताम्ररूपं माषकमर्धमाषकं काकणीमर्धकाकणीमिति ।**

———————

प्रतिपदपञ्चिका

व्ययक्रियाभारिकमिति, व्ययभारिकं बहुपरिव्ययसाध्यं क्रियाभारिकं कर्म भूयिष्ठं आकरं भागकेन च पञ्चभागषड्भागादिना प्रक्रयेण परिपणेन वा अन्येषां दद्यात् । लाघविकमल्पव्ययमल्पप्रयासं चाकरमात्मना कारयेत् ।

इदानीमवान्तराध्यक्षव्यापारमाह—लोहाध्यक्ष इति, लोहशब्देन सुवर्णरजत-व्यतिरिक्तं ताम्रादिकं गृह्यते । तदध्यक्षस्तत्कर्मान्ताधिकारी, ताम्राद्युपस्करघटनकर्मा-न्तान् कारयेत् । ताम्रादयः प्रतीताः आरकूटको रीतिका वृत्तं वृत्ताख्यलोहभाण्ड-व्यवहारं चेत्यत्र लोहशब्दस्ताम्रादिसमस्तवाचकः । भाण्डव्यवहारं घटिका ताम्रो-पस्करादिक्रयविक्रेयव्यवहारं चः समुच्चये ।

श्रीमूला

अथ पण्यव्यवहारार्थं लक्षणाध्यक्षव्यापारमाह—लक्षणेत्यादि । लक्षणाध्यक्षः लक्षणं पणमाषकादिरूपनिर्माणं तदध्यक्षः टङ्कशालाध्यक्ष इति यावत् । पण-व्यवहारश्च रूप्यरूपश्चतुर्विधः ताम्ररूपश्चतुर्विधः इत्यष्टविधे तस्मिन् रूप्यरूपः चतुर्भागताम्रमित्यादिना, ताम्ररूपश्च पादाजीवमित्यादिना व्युत्पाद्यते । षोडशमाषको हि पणः प्रसिद्धः, तस्य चतुर्भागश्चत्वारो माषाः तत्प्रमाणं ताम्रं यस्य तथाविधम्, तीक्ष्णत्रपुसीसाञ्जनानामन्यतममाषबीजयुक्तं-तीक्ष्णं कालायसं त्रपु रङ्गं सीसं योगेष्टाख्यम्, अञ्जनं रसाञ्जनम्, एषां चतुर्णामन्यतमस्य माषप्रमाणेन बीजेन निर्माणार्थेन युक्तम्, अर्थात् परिशिष्टैकादशमाषपरिमाणरूप्यकम्, रूप्यरूपं रूप्यांशभूम्ना रूप्यमयम्, पणं पणसंज्ञं नाणकविशेषम्, कारयेत् । इति उक्तेन प्रकारेण, अर्धपणं पादम् अष्टभागं कारयेत् पणोक्तताम्राद्यर्धप्रमाणयोगेनार्धपणाख्यं तच्चतुर्भागप्रमाणयोगेन पादपणं तदष्टभागप्रमाणयोगेनाष्टभागाख्यं च निर्मापयेदित्यर्थः । प्रकारान्तरार्थो वा इति शब्दः इति कारयेदिति योज्यः, त्रिपादकादिकं प्रकारान्तरमपि व्यवहारानुगुणं निर्मापयेदि-त्यर्थः । पादाजीवं रूप्यरूपचतुर्भागव्यवहार्यम्, ताम्ररूपं ताम्रांशभूम्ना ताम्रमयं रूपम्, माषकं माषकाख्यं कारयेत् । ताम्रस्यैकादश धान्यमाषाः रूप्यस्य चत्वार-स्तीक्ष्णाद्यन्यतमस्यैक इति योगप्रमाणेन रूप्यरूपपणवत् षोडशधान्यमाषप्रमाणकोऽयं ताम्ररूपमाषको द्रष्टव्यः । एवं माषकोक्तताम्राद्यर्धप्रमाणयोगेनार्धमाषकम् तच्चतुर्भाग-प्रमाणयोगेन काकणीं, तदष्टभागप्रमाणयोगेनार्धकाकणीं च कारयेत् ।

[ नाणकप्रचारव्यवस्थाया रूपपरीक्षककर्तव्यता,
तत्तद्देयांशाः, चोराणां दण्डश्च ]

**रूपदर्शकः पणयात्रां व्यावहारिकीं कोशप्रवेश्यां च स्थापयेत् ।**

---

### चाणक्यटीका

लक्षणाध्यक्षः हृट्टाङ्कितगजपतिरित्यर्थः । ( चतुर्भागताम्रं ) चतुर्भागं ताम्र यस्य तम् । रूप्यरूपमिति प्राधान्याद् व्यपदेशः । तीक्ष्णत्रपुसीसलोहानाम् अञ्जनस्य माषकप्रमाणेन बोजस्थानीयेन सर्वद्रव्यैकीकरणार्थेन वर्णान्तरकरणार्थेन च युक्तं कारयेत् । वर्णादिभेदेन चतुर्विधम् ॥

पादाजीवं ताम्रप्रक्षेपाद् ( रूपाद् अलाभितं ? ) शुद्धरूप्यसमानरूपमित्यर्थः । परिमाणप्रसिद्धया षोडशपरिमाणं यथोच्यते पुराकल्पे । एतदपि षोडशपलमाष- ( शवर्यत् ? ) षोडशमाषं कार्षापणमिति । द्वादशपणो दण्ड इत्यादिपरिज्ञानार्थं तूच्यते त्रैकार्षिकः ताम्रिकः पण इति । रूप्यपणादिव्यवहारादपि लाघवार्थमाह— ताम्ररूपमिति । ताम्रमाषकाष्टभागोऽर्धकाकणी । अपरे योगविभागेन व्याचक्षते—ताम्रं रूपं किं प्रमाणमिति चेत्, पणमर्धपणमित्यादि । तच्च दण्डकर्मौपयिकम् । ततो माषकमित्यादि । एवंरूपं रूपं चतुर्विधमष्टविधमिति ( अ ? ) नयने सुवर्णरूपाण्यपि व्यवहारविशेषार्थं योजनीयानीति ॥

### प्रतिपदपञ्चिका

एवं लोहाध्यक्षव्यापारमभिधाय पणयात्राव्यवहारार्थं, लक्षणाध्यक्षव्यापारमाह- लक्षणाध्यक्ष इत्यादि । लक्षणाध्यक्षष्टङ्कशालाधिकारी । स व्यवहारार्थं रूप्यरूपं कार्षापणमिति च ।

प्रसिद्धव्यपदेशं रूप्यमयं तावदाह—चतुर्भागताम्रमित्यादिना । शास्त्रान्तर- प्रसिद्धः षोडशमाषकः पणः तस्य चतुर्भागः चत्वारो (माषप्रमाणेन) माषकास्ताम्रं तीक्ष्णादीनां चतुर्णामेकतमस्य माषप्रमाणेन बीजेन बन्धनार्थेन युक्तमेकादशरूप्यमाषक- पणाख्यमुत्तमरूपं कारयेत् । एतेनैव योगेन तदर्धप्रमाणमर्धपणं चतुर्भागप्रमाणकं पादकं पादार्धेनाष्टभागमिति कारयेत् ।

एवं सारतमां कोशप्रवेश्यां पणयात्रामुक्त्वा व्यावहारिकीमाह—पादाजीव- मित्यादि । आजीव्यत इत्याजीव्यो रूप्यरूपस्य चतुर्भागः । ताम्ररूपमिति ताम्रमयं रूपं रूप्यस्य चत्वारो भागास्ताम्रस्य चैकादश भागाः पूर्ववत्तीक्ष्णादीनाम् अन्यतम- भागयुक्तं माषकं धान्यमाषकदशकप्रमाणमर्धमाषकं तदर्धं काकणीं माषचतुर्भागमर्धका- कणीम्माषकाष्टकभागमित्येवं कारयेत् ।

### श्रीमूला

रूपदर्शक इति । रूपदर्शकः रूपपरीक्षकः, पणयात्रां पणदानादानप्रस्थानम्, व्यवहारिकीं व्यवहारप्रयोजनाम्, कोशप्रवेश्यां च कोशप्रवेशनयोग्यां च, स्थापयेद् ईदृशी

**रूपिकमष्टकं शतं, पञ्चकं शतं व्याजीं, पारीक्षिकमष्टभागिकं शतं; पञ्चविंशतिपणमत्ययं चान्यत्र कर्तृक्रेतृविक्रेतृपरीक्षितृभ्यः ॥**

———————

श्रीमूला

पणयात्रा व्यवहारार्था ईदृशी कोशप्रवेशनार्थेति तत्सारासारभावपर्यालोचनया व्यवस्थापयेत् । इयं राजकर्तृका पणयात्रा ।

जानपदकारितायां तस्यां राजभाव्यमाह—रूपिकमित्यादि । अष्टास्योपदा दीयते अष्टकम् पञ्चास्योपदा दीयते पञ्चकम् । अष्टकं शतं पणशतेऽष्टपणग्रहणं रूपिकसंज्ञम्, पणशते पञ्चपणग्रहणं व्याजीसंज्ञम्, पणशतेऽष्टभागग्रहणं पारीक्षिकसंज्ञम् । रूपिकं व्याजीं पारीक्षिकं च यथोक्तलक्षणं स्थापयेत् व्यवस्थापयेत् । तत्र रूपिकं कर्मकरभृतिः, व्याजी राजभागः, पारीक्षिकं परीक्षकभृतिरिति बोद्धव्यम् । पञ्चविंशतिपणम्, अत्ययं च दण्डं च स्थापयेद्, अर्थादपराधे सति । स चापराधः सन्निहिताष्टभागिकपदानुकर्षणेनाष्टभागभवं दण्डमिति व्याख्यानादष्टभागापहारलक्षणो द्रष्टव्यः । अनया दिशा चतुर्भागाद्यपहारे दण्डद्वैगुण्यादिकमुन्नेयम् । केष्वपराधिषु विषयेऽयं दण्डमित्याकाङ्क्षायामाह—अन्यत्रकर्तृक्रेतृविक्रेतृपरीक्षितृभ्य इति । ये करणक्रयणादावधिकृतास्तदतिरिक्तेषु विषये । ते च जानपदा अध्यक्षपुरुषकर्मकरा वेत्यवसेयम् । अन्यत्र कर्त्रादीनां त्वपराधे द्रव्यसारासारतापेक्षो दण्डः प्रागुक्त एव । भट्टस्वामी त्वाह—'तेषां त्वन्यत्रकर्त्रादीनामुक्त एव दण्डः "कूटकुरूपकं कुर्वतः कारयतो निपातयतो वा सहस्रदण्ड इति" इति । ईदृशं मूलवाक्यं मृग्यम् ।

चाणक्यटीका

रूपदर्शकः परीक्षाकुशलः । तदाजीवपणस्थितिःद्विः प्रकारा ( भाति स्पष्टा तैः पणैः ? ) क्रयादिव्यवहारार्थां कोशप्रवेश्यां चातिस्पष्टलक्षणैः स्वार्थानि पञ्चावराणि ।

पारीक्षिकमिति परीक्षायां भवं नवं पुराणं वा शतं परीक्ष्य रूपमष्टभागं लभेत । पञ्चविंशतिपणमत्ययञ्च राजकर्मान्तात् अन्यत्र कर्त्रादीनां स्थापयेद् दण्डमध्यक्षः ॥

प्रतिपदपञ्चिका

रूपदर्शकइति, रूपपरीक्षकः पणयात्रां दातृगृहीतृव्यवहारं द्विविधां व्यावहारिकीं लोकव्यवहारार्थं पादाजीवं ताम्ररूपमित्येवं लक्षणां कोशप्रवेश्यां च व्ययभाण्डागारप्रवेशनार्हां चतुर्भागताम्रं रूप्यरूपमित्येवंलक्षणां हीनोत्कृष्टभेदेनापि व्यवस्थापयेत् ।

इत्येवं राजकर्तृकां पणयात्रामभिधाय जानपदानां कारयतां राजभाव्यमाह—रूपिकम् अष्टकं शतमित्यादि, अष्टौपणा गृह्यास्तस्य च रूपिकामिति संज्ञा । तथा पणशते पञ्चपणाग्राह्यास्तस्य च व्याजीति संज्ञा । पारीक्षिकं परीक्षानिमित्तमाष्टभगिकं शतं पणशते पणस्य अष्टभागो ग्राह्यः, तस्य च पारीक्षिकमिति संज्ञा । पञ्चविंशतिपणमत्ययं च स्थापयेदिति वर्तते । यथा रूपितव्याजि पारीक्षिकाणि त्रीण्युपादानानि तद्वत्पञ्चविंशतिपणात्ययं च, चकारादनन्तरोक्तोऽष्टभागिकशब्दोऽत्रानुकृष्यते । ततश्चाष्ट-

[ स्वर्णाद्याकराध्यक्षकर्तव्यानि ]

**खन्यध्यक्षः शङ्खवज्रमणिमुक्ताप्रवालक्षारकर्मान्तान् कारयेत् पणनव्यवहारं च ॥**

[ लवणाध्यक्षकर्तव्तसङ्ग्रहः ]

**लवणाध्यक्षः पाकमुक्तं लवणभागं प्रक्रयं च यथाकालं सङ्गृह्णीयात्, विक्रयाच्च मूल्यं रूपं व्याजीं च ।**

---

प्रतिपदपञ्चिका

भागिकमष्टभागे भवं पणाष्टभागमात्रापचारेण जानपदादीनां अध्यक्षपुरुषकर्मकराणां वा पञ्चविंशतिपणमत्ययं दण्डं स्थापयेत् एवं पणचतुर्भागापहारे चतुर्भागिकं पञ्चाशत्पणमित्येवमपचारवृद्धौ दण्डवृद्धिः। किमयं सर्वेषामेवापचारेषु दण्डो नेत्याह—अन्यत्र कर्तृक्रेतृपरीक्षितृभ्य इति। अन्यत्र अन्यस्मिन्नपराधेष्टभागापहरणादौ लक्षणाध्यक्षमाह—लक्षणाध्यक्ष इत्यादि। पाकामुक्तमुखादिषु अयमन्यत्रशब्दो व्याख्यानाद्द्विरावर्तत इति। तेषां त्वन्यत्र कर्त्रा मुक्त एव दण्डः कूट कुरूपकं कारयतो निपातपतो वा सहस्रदण्ड इति।

श्रीमूला

अथ खन्यध्यक्षव्यापारमाह—खन्यध्यक्ष इत्यादि। खन्यध्यक्षः स्वर्णरत्नाद्याकराधिकारी, शङ्खवज्रमणिमुक्ताप्रवालक्षारकर्मान्तान् शङ्खानां कर्मान्तान् पाटनघर्षणादिक्रियाः वज्रमणिमुक्ताप्रवालानां कर्मान्तान् खननशोधनरञ्जनादिक्रियाः क्षाराणां कर्मान्तान् यवक्षारादीनाम् उत्पादनादिक्रियाश्च, कारयेत्। पणनव्यवहारं च शङ्खादिक्रयविक्रयव्यवहारं च कारयेत्।

लवणाध्यक्षव्यापारमाह—लवणेत्यादि। लवणाध्यक्षः, पाकमुक्तं परिणतं निष्पन्नम्, लवणभागं भागार्पिताकरलभ्यं लवणस्य भागम् प्रक्रयं च प्रक्रयः परिपणः अमुकाकरस्यैतावल्लवणं देयमिति परिभाष्यार्पितादाकराल्लभ्यं चेत्यर्थः, यथाकालं क्लृप्तकालानतिक्रमेण, सङ्गृह्णीयात्। तदिदं राजपण्यं वणिग्भिर्विक्रेतव्यम्। विक्रयाच्चेति। विक्रयाच्च तद्विक्रयलब्धद्रव्याच्च, मूल्यं पण्यमूल्यम्, रूपं पारीक्षिकमष्टभागिकलक्षणम्, व्याजीं च पुनर्मीयमानीनतापरिहारार्थमधिकतया गृह्यमाणां मानव्याजीं च सङ्गृह्णीयादिति वर्तते।

चाणक्यटीका

खन्यध्यक्षः खनिकर्मनियुक्तः शङ्खादीनां संस्कारोऽवतरणक्रियारूपाणि। क्षारस्य धात्वादिशोधनार्थान् कर्मान्तान् कारयेत्। सुवर्णादीनां तु कर्मान्ता विहिताः पुनश्च विशेषा वक्ष्यन्ते। लक्षणकर्मान्तश्च पण्यव्यवहारश्च। एकमुखमित्यादि योज्यम् ॥

**आगन्तुलवणं षड्भागं दद्यात् । दत्तभागविभागस्य विक्रयः ।**

---

### चाणक्यटीका

लवणाध्यक्षः लवणाधिकृतः । पाकमुक्तमिति पाकमात्रमन्यद्रव्येणादुष्टम् । लवणभागं ( किम ? क्लृप्त ) प्रमाणम् । दशपञ्चदशभागमिति वचनात्[1] । यथाचरित्रं वा न्यूनमधिकं वा एतद् अ ( न )ल्पव्ययक्रियाकारितमाकरं भागेन यद ( ध्यात्म ? ध्यक्ष ) स्योक्तम् । ( यत्तु प्रक्रयेण तस्य प्रक्रयः किं पाकमुक्तवचने ? ) एवं यथा-परिभाषितता, एवमादौ फलकाले विक्रीय वा दास्यामीति यथा प्रदिष्टं सङ्गृह्णीयात् । विक्रयादिति भागप्राप्तस्य लवणस्य विक्रयाद् यथोचितं मूल्यं हिरण्यादिकं-प्राप्यव्याजौ च वर्ज्यमाने स्वदेशसमुत्थस्य विक्रयात् सङ्गृह्णीयात् ॥

### प्रतिपदपञ्चिका

एवं लक्षणाध्यक्षव्यापारमभिधाय खन्यध्यक्षव्यापारमाह—खन्यध्यक्षश्शङ्ख-वज्रेत्यादि शंङ्खादीनां षण्णां कर्मान्तान् कारयेत् । तत्र शङ्खकर्मान्तान् पाटनघर्षणादिभिः वलयादि क्रिया, वज्रमणिमुक्ताप्रवालानां खनन-शोधन-रञ्जन-वेधना क्रिया, क्षाराणां यवक्षारादीनां उत्पादनपरिष्क्रियादिकाः पणनव्यवहारं च तेषामेव शङ्खदीनां क्रयविक्रि-यादि खन्यन्तर्गतमेव ।

लवणाध्यक्षमाह—लवणाध्यक्ष इत्यादि । पाकमुक्तं लवणभागं भागार्पितलवणा-करलब्धव्यं प्रक्रयं च परिपणार्पिताकरलब्धव्यम् । उक्तं हि, व्ययक्रिया हारिकर्माकरं भागकेन प्रक्रयेण वा दद्यादिति तद्द्विविधं चैतद् द्रष्टव्यम् । यथाकालमिति यथापरिभाषितकालं सङ्गृह्णीयात् । तच्च सङ्गृहीतं राजपण्यं वैदेहकादिना विक्रेतव्यम् ।

तस्मच्च विक्रयाद् यदादेयं तदाह—विक्रयाच्च रूपमिति रूपं पारीक्षिकं मूल्यं च यथार्थं पण्यमूल्यं व्याजितं च आयमानव्यावहारिकमनयोर्विशेषमुक्तं हि । मानोन्मानविशेषो व्याजीति ।

### श्रीमूला

इत्थं राजपण्यसम्वद्धमभिधायागन्तुकपण्यसम्बद्धमाह—आगन्तुलवणमिति । अगन्तुलवणं परदेशागतं लवणम्, अर्थात् तद्विक्रेता, षड्भागं दद्यात् षष्ठं भागं राज्ञे दद्यात् । दत्तभागविभागस्य दत्तो राज्ञे-र्पितः भागः षड्भागो विभागो मानव्याजी च येन तस्यागन्तुलवणव्यवहारिणः, विक्रयो भवति । विक्रये इति सप्तम्यन्तपाठस्तु श्रेयान् उत्तरग्रन्थेनैकवाक्यत्वस्य स्वरसतो लाभात् ।

---

१. दशभागः पञ्चदशभागो वेति लवणेतरस्य क्षौमदुकूलादेः शुल्कं विहितं शुल्क-व्यवहारे । ११।२२ ।

**पञ्चकं शतं व्याजीं, रूतं, रूपिचं च। क्रेता शुल्चं, राजपण्यच्छेदानुरूपं च वैधरणं दद्यात्, अन्नत्रक्रेता षट्छतमत्यय़ं च।**

---

चाणक्यटीका

( इयत्यवसून् कृतः ? आगन्तुक ) लवणमिति परदेशादागतम्। यदुपचारात् तर्क्यंभूतम्। षड्भागं दद्यात्। दत्तभागविभागस्येति दत्तयथोक्तभागस्य दत्तरूपव्याजीविभागस्य स्वदेशमुक्तस्यागन्तुकस्य वा विक्रयोऽनुज्ञेयः।

प्रतिपदपञ्चिका

इत्येवं राजपण्यादेयं निगद्यागन्तुकपण्यस्याह आगन्तुकलवणमिति। परविषयादागतं षड्भागं दद्यात्। राज्ञः तच्च षड्भागं कदाचित् कालान्तरमास्ते। कदाचित् तदानीमेव क्रि(वि)क्रीयते च।

विक्रये च यदादेयं तदाह—दतभागविभागस्येत्यादि भागः षड्भागः,

श्रीमूला

न केवलं षड्भाग—मानव्याज्योर्द्वयोरेलदानम्, किन्त्वन्येषामपि त्रयाणां तद् भवतीत्याह—पञ्चकमित्यादि। पणशते पणपञ्चकलक्षणां व्याजीम्, पारीक्षिकं शतस्याष्टभागिकलक्षणं रूपशब्दवाच्यं पणशते पणाष्टकलक्षणं रूपिकसंज्ञं च, दद्यादित्यनुषज्यते।

क्रेतेति। क्रेता शुल्कं दद्यात्, न तु विक्रेता। राजपण्यच्छेदानुरूपं राजपण्याद् विक्रीयमाणाद् यश्छेदः यावन्नष्टं तदनुरूपम् वैधरणं वैधरणशब्दितं छिन्नपूरणं च दद्यात्। अन्यत्र क्रेता विद्यमाने राजपण्येऽन्यतो लवणं क्रीणानः, षट्छतम्, अत्ययं च दण्डं च, दद्यात्।

चाणक्यटीका

पञ्चकं शतमिति पञ्च दीयन्ते यस्मिंस्तत् पञ्चकं शतं व्याजीम्। रूपं चाष्टकम्,।

एवं पलशते त्रयोदश ( वप्रानि राज्ञो भवतः ? ), क्रेता शुल्कं यथोक्तं दद्यात्। राजपण्यानाम् अवपातयिता छेदानुरूपं वैधरणं विसदृशकरणात्। स एव क्रमो राजलवणस्य। सहस्रं गृहीत्वा विक्रीणानस्य यच्छिद्यते शतमध्यर्धं वा तत्तत् पूरयेदित्यर्थः। अन्यत्र क्रेता राजलवणे सति षट् शतं दद्यात्। षडेव शतात् ( षट्छतमधिकं शतमिति ? ) अधिकं शतं षड्छतमिति॥

प्रतिपदपञ्चिका

विभागो मानव्याजीति। पुनः पञ्चकं शतं व्याजीति पणशते पञ्चपणग्रहणस्य च व्याजीति संज्ञा। रूपं च पारीक्षितमष्टभागिकम्। रूपिकं अष्टकंशतमित्येव मागन्तुलवणस्य पञ्चोपादानविशुद्धो विक्रय इति।

**विलवणमुत्तमं दण्डं दद्यात्, अनिसृष्टोपजीवी च अन्यत्र वानप्रस्थेभ्यः ।**

**श्रोत्रियास्तपस्विनो विष्टयश्च भक्तलवणं हरेयुः ।**

**अतोऽन्यो लवणक्षारवर्गः शुल्कं दद्यात् ।**

---

प्रतिपदपञ्चिका

क्रेता शुल्कमिति[1], शुल्कं तु क्रेता दद्यात् । न विक्रेता । निजपण्यस्य राजपण्यस्य विक्रयार्थमध्यक्षस्य वैदेहकस्य वा अर्पितस्य यस्मिन्नाशितं तदनुरूपं तावन्मात्रमेवासौ वैंधरणं दद्यात् । वैधरणमिति छिन्नपूरणस्य संज्ञा अन्यत्र क्रेता राजपण्ये सति षट्शतदण्डं दद्यात् ।

श्रीमूला

विलवणमिति । विलवणं विड-(कृतकलवण)-मृदादिमिश्रं लवणम्, अर्थात् तथा विधलवणव्यवहर्ता, उत्तम दण्डम् उत्तमसाहसम्, दद्यात् । अनिसृष्टोपजीवी च यो राजाननुमत एव लवणमुत्पाद्योपजीवति स च उत्तमं दण्डं दद्यात् ।

तत्रापवादमाह—वानप्रस्थेभ्योऽन्यत्र वानप्रस्थान् विहाय । तेषां त्वनिसृष्टोपजीविनां न दण्ड इत्यर्थः ।

श्रोत्रिया इति । श्रोत्रियाः वेदाध्यायिनः, तपस्विनः दीनाः, विष्टयः हठकारितकर्मकारिणश्च, भक्तलवणम् अन्नाभ्यवहारमात्रपर्याप्तं लवणम् हरेयुः विनैव शुल्कं नयेयुः ।

अत इति । अतोऽन्यः उक्तादितरः, लवणक्षारवर्गः 'सैन्धव-सामुद्रविड-यवक्षार-सौवर्चलोद्भेदजा लवणवर्गः' इति 'फाणित-गुड-मत्स्यण्डिका-खण्डशर्कराः क्षारवर्गः' इति च कोष्ठगाराध्यक्षे वक्ष्यमाणो लवणवर्गः क्षारवर्गश्च, अर्थात् तत्कर्ता, शुल्कं दद्यात् शुल्कमेव दद्यान्न तु व्याज्यादिकमित्यर्थः ।

चाणक्यटीका

( विडलवणं )[2] मृत्तिकादियुक्तं विक्रीयमाणम् । उपचारात् कर्तृनिर्देशः, विक्रीणानो वेत्यध्याहार्यम् । अनिसृष्टोपजीवी च । अनिसृष्टोपजीविनश्च बध्वा कर्म कारयेत् । तत्रैवाकर इत्यर्थः । लवणाकरे तूत्तमं दण्डं दद्यात् । वानप्रस्थास्तु अनिसृष्टोपजीविनोऽपि स्तोकं गृह्णन्तः ( त्रपु ? क्रतु ) धर्मार्थमनुज्ञेयाः । अतस्त्वन्ये श्रोत्रियास्तपस्विनो विष्टयश्व तत्कर्मकराः भक्तार्थमेव लवणं हरेयुः नाल्पमप्यधिकम् ॥

---

१. क्रेता शुल्कमिति मूले पाठान्तरमिति ।

२. विडयवक्षारसौवर्चलोद्भेदजा लवणवर्गं इति कोष्ठागाराध्यक्षे ११।१५ वक्ष्यति ।

[ आकरेषु प्रधानद्रव्यसङ्ग्रहस्य
सर्वार्थसाधकता ]

एवं मूल्यं विभागं च व्याजीं परिघमत्ययम् ।
शुल्कं वैधरणं दण्डं रूपं रूपिकमेव च ॥८३॥
खनिभ्यो द्वादशविधं धातुं पण्यं च संहरेत् ।

---

चाणक्यटीका

अत इति । अस्मादुक्ताल्लवणाद् अन्यः लवणवर्गः सैन्धवादिः क्षारवर्गश्च । भागं ( दस्वाद्वि ? विंशति ) कादिमं[1] शुल्कमेव केवलं दद्यात् । न भागं रूपं व्याजीं वेति विशेषणार्थमभिधानम् ॥

प्रतिपदपञ्चिका

विलवणं विलादिविमिश्रतं तद्ग्रहणेन तद्व्यवहारी गृह्यते । स उत्तमं दण्डं दद्यात् । अनिसृष्टोपजीवी च, अननुज्ञातः स्वयमुत्पाद्य उपजीवी च उत्तममेव दण्डं दद्याद् ।

किमेवं सर्व एव दण्डं दद्यात्, नेत्याह—अन्यत्र वानप्रस्थेभ्य इति । ते ह्यनिसृष्टोपजीविनोऽपि नादण्ड्याः श्रोत्रिया वेदाध्यायिनोऽपि गृहस्थाः ब्राह्मणाः तपस्विनः पाषण्डाः अन्येषां सम्भवात् । विष्टयश्च तत्कर्मपराः । ततो भक्तोपभोगमात्रमिति ।

पाथेयभैक्षादिभोजनमात्रोपयोगि लवणं हरेयुः तावन्मात्रमदोषायेति । अतोऽन्यत्र उक्तव्यतिरेके लवणक्षारवर्गः शुल्कमेव दद्यात् । तच्च स्वयमेव वक्ष्यति, सैन्धवसामुद्रिकवि(ड)लयवक्षारसुवर्चिकोद्भेदजलवणवर्जमिति सैन्धवसामुद्रविल(जा)यानि यवक्षारसुवर्चिकोद्भेदजादयः क्षारा इति ।

श्रीमूला

अथ श्लोकनाह—एवमित्यादि । एवम् उक्तप्रकारेण, खनिभ्यः, मूल्यं प्रतीतम्, विभाग षड्भागं, व्याजी पञ्चकं शतं मानव्याजीत्युभयविधाम् परिधं पारीक्षिकं धातुसमुत्थितानां तज्जातकर्मान्तेषु प्रयोगात् सिद्धं लाभविशेषं वा, अत्ययम् आश्रावितं दमम्, शुल्कं प्रतीतम् वैधरणं छिन्नपूरणम् दण्डम् अश्रावितं दमम्, रूपं रूप्यरूपं ताम्ररूपमिति द्विविधम् रूपिकम् अष्टकं शतम्, धातुं सुवर्णरूप्यादिधातुं, पण्यं विक्रेयं च, द्वादशविधम् उक्तद्वादशप्रकारम् उपादानम्, संहरेत् समुत्पादयेत् ।

---

१. क्षारलवणादीनां विंशतिभागः पञ्चविंशतिभागो वेति शुल्कव्यवहारे वक्ष्यते । ( ११।२२ )

**एवं सर्वेषु पण्येषु स्थापयेन्मुखसङ्ग्रहम् ॥८४॥**
**आकरप्रभवः कोशः कोशाद्दण्डः प्रजायते ।**
**पृथिवी कोशदण्डाभ्यां प्राप्यते कोशभूषणा ॥८५॥**

[ इत्यध्यक्षप्रचारे आकरकर्मान्तप्रवर्तनं द्वादशोऽध्यायः
आदितः त्रयस्त्रिंशः ]

---

चाणक्यटीका

एवमिति, यथोक्तनिगमनम् । परिघमिति, अत्र व्यवहारविघातम् । यथोक्तं व्यवहारम् एवमास्थापयेदिति ।

रूपमिति, पणमर्धपणमित्यादिकम् । धातुं सुवर्णादीनाम् । पण्यञ्च शङ्खादिकम् । शेषं गतार्थम् ।

प्रतिपदपञ्चिका

अध्यायप्रान्ते श्लोकानाह—एव मिति । यथोक्तोपसंहारः मूल्यादीनि, दशधातुपण्ये च द्वे इत्येवमेतानि द्वादश संहरेत् । तत्र मूल्यविभागौ प्रतीतौ, व्याजी द्विविधा, पञ्चकं शतम् । मनोन्मनाविशेषश्च परिघः पारीक्षिकमिति केचित् । धातुसमुत्थितानां तज्जातकर्मान्तेषु प्रयोगाल्लाभविशेष इति । अपरेऽत्ययदण्डयोः विशेषः अत्ययः आश्रावितः । वक्ष्यति हि अत्ययं च ज्ञापयेदिति ।

दण्डः प्रश्रावित एव । शुल्कवैधरणावृत्तौ रूपं द्विविधमभिहितं रूप्यरूपं ताम्ररूपं चेति । रूपिकमष्टकं शतमिति, एतद्धातुपण्याभ्यां सह खनिभ्यो द्वादशप्रकारमप्युपादानं संहरेत् ।

श्रीमूला

एवं, सर्वेषु पण्येषु पणनयोग्येषु मध्ये, मुखसङ्ग्रहं मुखमिव मुखं प्रधानं सारस्तस्य सङ्ग्रहं, स्थापयेत् ॥

आकरस्य सर्वार्थसाधकतामध्यायान्तिमश्लोकेन दर्शयति—अकरेत्यादिना ॥

इति कौटिलीयार्थशास्त्रव्याख्यायाम् अध्यक्षप्रचारे द्वितीयाधिकरणे
द्वादशोऽध्यायः । आकरकर्मान्तप्रवर्तनम्, ॥ आदितस्त्रयस्त्रिंशः ॥

चाणक्यटीका

एवं सर्वेष्विति एवमतो व्यतिरिक्तेषु भाण्डाजिनादिष्विवपण्येषु यथार्हमायानां मुखसङ्ग्रहं स्थापयेत् ॥

आकरप्रभव इत्यस्य माहात्म्यमाह । कोशात् स्वदण्डभरणेन पराणाञ्चोपजापेन ॥

इत्याकरकर्मान्तप्रवर्तनं द्वादशं प्रकरणम् ।

॥ द्वादशश्चाध्यायः ॥

प्रतिपदपञ्चिका

उपरितो यथैतत्संहरेदेवं सर्वेषु पण्येष्विति निर्धारणे सप्तमी उ सङ्ख्यानेमुखसङ्ग्रहं सारसङ्हं स्थापयेदिति केचित् ।

अन्ये तु मुखसङ्ग्रहमेकार्पणं स्थापयेदिति, अनुष्ठानादरातिशयार्थम् आकर-कर्मान्तप्रवर्तनस्य प्राधान्यमध्यायप्रान्ते प्रतिपादयति आकरप्रभव इत्यादि । निगदव्याख्यातश्लोक इति ।

इति भट्टस्वामिनः प्रतिपदपञ्चिकायां अध्यक्षप्रचारिके
द्वितीयेऽधिकरणे द्वादशोऽध्यायः ।
आदितस्त्रयस्त्रिंशोऽध्यायः ।

# एकत्रिंशं प्रकरणम

## त्रयोदशोऽध्यायः ।

## अक्षशालायां सुवर्णाध्यक्षः ।

[ भूषणाद्युपकरणनिर्माणशालावश्यकता सौवर्णिकगुणश्च ]

**सुवर्णाध्यक्षः सुवर्णरजतकर्मान्तानां असम्बन्धावेशनचतुश्शालाम् एकद्वाराम् अक्षशालां कारयेत् ।**

---

### श्रीमूला

अक्षशालायां सुवर्णाध्यक्ष इति सूत्रम् । अक्षशालायां सुवर्णरूप्यादिनिर्माणशालायां, नियुक्तः सुवर्णाध्यक्षः, अर्थात् तस्य व्यापार इहाभिधीयत इति तदर्थः । प्रक्रान्तायां कोशप्रकृतौ प्रधानभूतस्य सुवर्णादेरुत्पत्तिः समनन्तराध्याययोरुक्ता । तस्यावस्थान-जाति-वर्ण-गुणशोधन-दोषपरीक्षण-परिकर्मादिकथनपूर्वमर्जनं रक्षणं चेदानीमभिधीयते ।

सुवर्णाध्यक्ष इति । सुवर्णाध्यक्षः, सुवर्णरजतकर्मान्तानां सुवर्णरजतसम्बद्धानामलङ्कारादिघटनक्रियाणाम्, अक्षशालाम् अवस्थानभूतां शालां, कारयेत् । सुवर्णादिपरिकर्मस्थानमक्षशालेत्यभिधीयते । तां कीदृशीम्, असम्बन्धावेशनचतुश्चालाम् असम्बन्धानि परस्परानुपश्लिष्टानि आवेशनानि शिल्पकर्मस्थानभूतानि चतुश्शालानि पृथक्-पृथक् चतस्रश्चतस्रः शाला यस्यां ताम् । असम्बाधावेशनेति पाठेऽप्ययमेवार्थः । एकद्वारां रक्षासौकर्यार्थं द्वारेणैकेन युक्तां च ।

### चाणक्यटीका

आकरोद्गतानां लोहानां शालानाञ्चाऽप्यध्यक्षव्यापारः ( उक्तः ) ।

इदानीं प्राधान्याद् भूयस्त्वाच्च सुवर्णाध्यक्षव्यापारः पृथगुच्यते—सुवर्णाध्यक्ष इति । सुवर्णरजतव्या·····द्या विशन्ति सुवर्णकारवस्तूनि कर्मस्थानानि आवेशनानि इतरेतरसत्त्वात् प्रतिषेधार्थमारम्भकाणि चतसृषु शालासु अनेकव्यापारार्थसु एवंविधाश्चतस्रः शाला यस्याः । तासां स्वारक्षार्थम् एकद्वाराम् । अक्षशालामिति एवंप्रसिद्धसंज्ञां कारयेत् ।

### प्रतिपदपञ्चिका

अक्षशालायां सुवर्णाध्यक्ष इति सूत्रम् ।

**विशिखामध्ये सौवर्णिकं शिल्पवन्तमभिजातं प्रात्ययिकं च स्थापयेत् ।**

---

प्रतिपदपञ्चिका

अक्षशाला सुवर्णरूप्यादिघटनशाला । तस्यामधिकृतोऽक्षशालायां सुवर्णाध्यक्षः तद्ग्रहणेन तद्व्यापारो गृह्यते । स इहाभिधीयत इति सूत्रार्थः । सम्बन्धस्तु कोश-प्रकृतिः प्रक्रान्ता सा पूर्वोक्तप्रकरणैरनेकशो अभिहितानन्तराध्यायद्वयेनैव प्रधानभूतस्य रत्नसुवर्णादिरुत्पत्तिरुक्ता ।

तस्येदानीं अवस्थितिवर्णशोधनपरीक्षणपरिकर्मभेदादि कथनप्रकारैरर्जनं रक्षणं चाभिधीयत इति । तदाह—सुवर्णाध्यक्ष इति । सुवर्णरजतकर्मान्तिानाम् अलङ्कारादिषु घटनक्रियाना वस्थानभूतां शालां कारयेत् ।

किंविशिष्टामित्याह—असम्बन्धावेशनेत्यादि । असम्बन्धानि परस्परमसंश्लिष्टानि आवेशनानि शिल्पकर्मस्थानानि, चतुश्शालानि प्रत्येकं चतस्रः चतस्रः परस्पराव-लोकिन्यः शाला येषु तानि । असम्बन्धावेशनचतुश्शालानि । यस्यां शालायां ताम-सम्बन्धावेशनचतुःशालां दारुकाख्यामवस्थानं ताम् । एकद्वारामिति, रक्षासौकर्यार्थम् । अक्षशालेति सुवर्णादिपरिकर्मावस्थानस्य संज्ञा, तां कारयेत् ।

श्रीमूला

विशिखामध्ये रथ्यामध्ये, सौवर्णिकं पौरजानपदानां रूप्यसुवर्णक्रयविक्रयकर्मा-धिकारिणं, स्थापयेत् । कथम्भूतं, शिल्पवन्तम् क्षेपणादिवक्ष्यमाणकर्मनिपुणम्, अभिजातं कुलीनम्, प्रात्ययिकम् उपधाशुद्धम् । चकाराज्जानपदत्वादिगुणयुक्तं । सौवर्णिकस्य व्यापारः सौवर्णिकप्रचारे वक्ष्यते । तस्यात्र निर्देशः सुवर्णाध्यक्षाधीनत्व-ज्ञापनाय राजधनपौरजानपदधनानां रक्षाविधानतुल्यत्वज्ञापनाय च ।

चाणक्यटीका

विशिखामध्य इति । अथवा इदं सुवर्णाध्यक्षो ( बहिरावरणमपि मध्ये ? ) सुवर्णविषयं यस्य शिल्पवन्तं सौवर्णिकं शिल्पकर्मणि ( कुशले ? ) कुशलिनं ल······ त्येवमर्थः ॥

प्रतिपदपञ्चिका

विशिखामध्ये रथ्यामध्ये सौवर्णिकं पौरजानपदानां रूप्यसुवर्णक्रयविक्रय-घटनादिनियोगाधिकारिणं शिल्पवन्तं क्षेपणादिसर्वकर्मकुशलमभिजातं कुलोद्गतं कुत्सितकर्मप्रतिषेधार्थं प्रात्ययिकमनेकशोदृष्टप्रत्ययमुपधाशुद्धमित्यपरे । चकाराज्जान-पदादिगुणोपेतं च तमेवंभूतं स्थापयेत् । तद्व्यापारश्चोपरितनाध्यायेऽभिधास्यते । इह त्वस्य निर्देशः ।

सुवर्णाध्यक्षाधीनत्व-ज्ञापनार्थं राजद्रव्याणां पौरजानपदद्रव्याणां च रक्षाविधानं प्रति तुल्यत्व-ज्ञापनार्थं च ।

[ देशवर्णयोः भेदेन सुवर्णस्य पाञ्चविध्यम्,
योनिभेदगुणभेदयोः त्रैविध्यं च ]

**जाम्बूनदं शातकुम्भं हाटकं वैणवं शृङ्गिशुक्तिजं; जातरूपं रसविद्धं आकरोद्गतं च सुवर्णम् ।**

---

श्रीमूला

अथ पञ्चविधं पञ्चवर्णं त्रियोनिं सुवर्णमाह—जाम्बूनदमिति । सुवर्णं, जाम्बूनदं मेरुप्रभवजम्बूनदीसमुद्भूतं जम्बूफलरसवर्णं, शातकुम्भं शतकुम्भपर्वतोत्पन्नं पद्मकिञ्जल्कवर्णं, हाटकं हाटकाकरोतपन्नम्, अम्लानाख्यकुरण्डकुसुमसवर्णम्, वैणवं वेणुपर्वतजं कर्णिकारपुष्पवर्णम्, शृङ्गशुक्तिजं सुवर्णभूमिजमिति भाषाटीका, तच्च मनश्शिलावर्णम् इति । पञ्चप्रकारस्य पञ्चवर्णस्य सुवर्णस्य त्रिविधामुत्पत्तिमाह—जातरूपमिति । जातरूपं स्वतः सुवर्णमेवोत्पन्नं, रसविद्धं रसयोगेन काञ्चनीकृतम्, आकरोद्गतं च आकरगतमृत्पाषाणादिभ्यः पातितं च । क्रियावादोत्पन्नमित्यपि केचित् । तत्पक्षे चतुर्योनित्वं बोध्यम् । अत्रायं भट्टस्वामिनः श्लोकः—

"हेम्नः पञ्चप्रकारस्य त्रियोनेः पञ्चवर्णकाः ।
जम्बूकोकनदाम्लानकर्णिकारमनश्शिलाः ॥" इति ।

चाणक्यटीका

( जाम्बूनदं, ज )म्बूनदी यया जम्बूद्वीपो विशेषव्यपदेशः, तस्यां नद्यां वालुकाकारं यद् भवति तज्जाम्बूनदम् । तथा शतकुम्भे हाटके च जातम् । वेणके भवम् । एवं शृङ्गशुक्तिसंस्थानं सुवर्णदीपाकारः······( पञ्च ) विधमित्येतज्जातरूपम् । कतिवर्णमिति केचिद् योजन्ति । अन्ये त्वाहुः ( एतानि रूपं च स्वभावादार्द्रकग्रन्थानार्गतसंस्थानं सप्तममिति ? ) पूर्वोक्तलक्षणेन रसेन विद्धं भावितम् आकारोद्भवं······मं चापरमिति भिन्नक्रमश्चशब्दः ।

प्रतिपदपञ्चिका

साम्प्रतं पञ्चभेदपञ्चवर्णत्रियोनिसुवर्णमाह—जाम्बूनदमित्यादि । जाम्बूनदं मेरौ जम्बूनदी, तत्समुत्पन्नं जम्बूरसवर्णं तच्च देवतानामेवेह तस्य निर्देशः । कदाचिद् विद्याधरादिभिरानीयेत, अर्जुनवद्दैवतानुभावयोगिनां तद्देशगमनमपि सम्भाव्येत वा, शातकुम्भं शतकुम्भपर्वतजं पद्मकेसरवर्णम्, हाटकं हाटकाकरोत्पन्नम्, कुरण्टकुसुमवर्णं, वैणवं वेणुपर्वतजं कर्णिकारकुसुमाभम्, शृङ्गिशुक्तिसुवर्णादि, तज्जं मनश्शिलाभम् ।

एवमेतस्य पञ्चप्रकारस्यापि त्रिविधामुत्पत्तिमाह—जातरूपमिति जातरूपं सुवर्णमेवोत्पन्नं रसविद्धं रसेन काञ्चनीकृत्य आकरोद्गतं मृत्पाषाणेभ्यश्च पातितम् । ( जातरूपं सुवर्णमेवोत्पन्नं ) चकारात् क्रियावादोत्पन्नमिति केचित् । तेषां चतुर्धा योनिः । तथा च— हेम्नः पञ्चप्रकारस्य त्रियोनेः पञ्चवर्णतः ।

**किञ्जल्कवर्णं मृदु स्निग्धं अनादि भ्राजिष्णु च श्रेष्ठम्। रक्तपीतकं मध्यमम्। रक्तमवरम्।**

[ द्रव्यान्तरमिश्रिताकरोत्पन्नयोः सुवर्णयोः शोधनप्रकारः ]

**श्रेष्ठानां पाण्डु श्वेतं च अप्राप्तकम्।**

**तत् येनाप्राप्तकं तच्चतुर्गुणेन सीसेन शोधयेत्।**

---

### श्रीमूला

गुणानाह—किञ्जल्केत्यादि। किञ्जल्कवर्णं, मृदु तप्तमतप्तं चारूक्षं, स्निग्धम् अखरम्, अनादि नादरहितम्, अनुनादीति पाठे दीर्घनादम्, भ्राजिष्णु भास्वरं च, सुवर्णं श्रेष्ठम् उत्तमोत्तमं भवति। रक्तपीतकं लोहितहरिद्रवर्णं मध्यमं श्रेष्ठानामेव मध्ये भवति। रक्तम् अवरम् उत्तमाधमं भवति।

अथ शोधनप्रकारमाह—पाण्डुश्वेतमिति। पाण्डु हरिणवर्णम्, श्वेतं सितं च, अप्राप्तकं तत्संज्ञं द्रव्यान्तरयोगेनोत्तमवर्णतामप्राप्तमिति कृत्वा। तत् तथाविधं स्वर्णम्, येनाप्राप्तकं येनापद्रव्येणाशुद्धतां गतम् तच्चतुर्गुणेन सीसेन, शोधयेद् आवर्तयेद् आ सीसक्षयात्।

### चाणक्यटीका

श्रेष्ठानामिति। तत्रप्रकार ( मिति हि ? मपीदं ) श्रेष्ठ ( मूल्य ? मध्य ) हीनानां श्रेष्ठानां श्रेष्ठमित्यर्थः। तेन श्रेष्ठस्य मध्यमाधमे मध्यमस्य मध्यमावरे इति ( भावा ? भेदा ) द्रष्टव्याः।

पाण्डु श्वेतञ्च द्विप्रकारमपीदं सुवर्णगुणम् अप्राप्तत्वाद् अन्यलो ( हा ? ह ) संसृष्टत्वाद् व्यवहाराप्राप्तत्वाद् अधमाधममित्यर्थः। तद् येनाप्राप्तमिति। तद्यत्प्रमाणेन ( प्रोक्तं ? प्राप्तं ) तन्न संसर्गात् प्राप्तमतस्तस्यापि वक्ष्यमाणवर्णिकया परिच्छिद्यैतावतेति काकिणीभिरिदमपसारितमिति। तच्चतुर्गुणेन (रसेन ? सीसेन) ध्मापितं परीक्ष्य लोहं शोधयेत्। सुवर्णं तत्रावशेषयेत्।

### प्रतिपदपञ्चिका

जम्बूकोकनदादि म्लानकर्णिकारमनश्शिला इति।

गुणानाह—किञ्जल्कवर्णमिति, तप्तमतप्तं च पद्मकेसरवर्णं मृदु अरूक्षस्निग्धमपरुषमुखरम् अनादिस्वनरहितम्। अपरे त्वनुनादीति पठन्तो दीर्घस्वनमिति व्याचक्षते। भ्राजिष्णु रुचिमत्। एतच्छ्रेष्ठमुत्तमोत्तमं। रक्तपीतं वर्णद्वयोपेतमध्यममुत्तमानामेव भवति। रक्तं रक्तैकवर्णम्, अपरमधमम्। श्रेष्ठमध्यमाभ्यां तदव्यक्तमेव।

साम्प्रतमशुद्धस्य लक्षणं शोधनप्रकारं चाह—पाण्डुश्वेतं चाप्राप्तकमिति। पाण्डुशरकान्डगौरं श्वेतमष्टादिकुसुमाभं, चः समुच्चये, अप्राप्तकं द्रव्यान्तरसङ्गमादुत्तमर्वणितमागतं तद् येन यावतापद्रव्येणाप्राप्तकमशुद्धं तच्चतुर्गुणेनापद्रव्यचतुर्गुणेन सीसेन शोधयेत्। आवर्तयेदासीसक्षयात्।

**सीसान्वयेन भिद्यमानं शुष्कपटलैर्ध्मापयेत् । रूक्षत्वाद् भिद्यमानं तैलगोमये निषेचयेत् ।**

**आकरोद्गतं सीसान्वयेन भिद्यमानं पाकपत्राणि कृत्वा गण्डिकासु कुट्टयेत् कन्दलीवज्रकन्दकल्के वा निषेचयेत् ।**

---

श्रीमूला

सीसान्वयेन सीसानुवेधेन, भिद्यमानं वियुज्यमानम्, शुष्कपटलैः शुष्कारण्यगोमयैः, ध्मापयेत् । रूक्षत्वाद् भिद्यमानम्, तैलगोमये तैले गोमये च, निषेचयेत् पुनःपुनरावर्त्यं प्रक्षिपेत् ।

आकरोद्गतस्य शोधने विशेषमाह—आकरोद्गतमिति । आकरोद्गतं सुवर्णम्, सीसान्वयेन भिद्यमानम् पाकपत्राणि कृशपत्राणि, कृत्वा, गण्डिकासु काष्ठफलकेषु, कुट्टयेत् अर्थात् काष्ठेन । अथवा, कन्दलीवज्रकन्दकल्के कन्दली वल्लिभेदः, वज्रं श्रीबेरं, कन्दं पद्ममूलम्, एतद्योगसिद्धे कषाये, निषेचयेत् ।

चाणक्यटीका

सीसान्वयेनेति । तत् ( नीत ? सीस ) व्यामिश्रयता स्फुटत् शुष्कपटलैः शुष्कारण्यगोमयैः विध्मापयेत् ( पलेन गोवासितक्षयात् ? ) । रूक्षत्वादिति ( सोसेवकाद् ? ) रूक्षीकृतं रूक्षमपि भिद्यमानम् । पाकयोग्यानि श्लक्ष्णानि कृत्वा ( गोष्ठगर्त्ति ? काष्ठगण्डि ) कासुपुनः कुट्टयेत् । ततः सन्ताप्य तैलयुक्ते गोमये निषेचयेत् । गोमयग्रहणेन रसस्य ग्रहणम् ॥

आकरसमुत्थम्, आकरसमुत्थेनैव······णं पाकयोग्यानि श्लक्षणपत्राणीति कृत्वा काष्ठगण्डिकासु पुनः पुनः कुट्टयेत् । ततः पचेत् पाकार्थानि पत्राणीति वचनात् । कन्दलीवज्रकन्दकल्कानि सेचयेत् । पक्वानीति द्वितीयः कल्पः ॥

प्रतिपदपञ्चिका

सीसान्वयेन सीसद्रवानुवेधेन[1] भिद्यमानं शुक्लपटलैरारण्यगोमयैर्ध्मापयेदाध्मापयेत् । रूक्षत्वाद्भिद्यमानं तैलगोमये निषेचयेत् आवर्त्यावर्त्यं प्रक्षिपेत् । अयं च विधिः जातरूपरसविद्धयोः द्रष्टव्यः । आकरोद्गतस्य विध्यन्तरविधानात् इति केचित् ।

आकरदोषात् सीसानुविद्धोत्पन्नस्य शुद्धिविधिमाह—आकरोद्गतमिति, सीसान्वयेन भिद्यमानपाकपत्राणि तनुपत्राणि, कृत्वा गण्डिकासु काष्ठाधिकरणेष्ठकाष्ठचुक्रि(न्ति)कया कुट्टयेत् । यद्वा-कन्दलीवज्रकन्दकल्के तत्कषाये निषेचयेत् । वा विकल्पे ।

---

१. सीसद्रव्यानुरोधेन ।

[ रूप्यस्य चतुर्धा विभागः, तत्र उत्तमादेः लक्षणम्, शोधनक्रमश्च ]

**तुत्थोद्गतं गौडिकं काम्बुकं चाक्रवालिकम् च रूप्यम्। श्वेतं स्निग्धं मृदु च श्रेष्ठम्। विपर्यये स्फोटनं च दुष्टम्। तत् सीसचतुर्भागेन शोधयेत्।**

**उद्गतचूलिकं अच्छं भ्राजिष्णु दधिवर्णं च शुद्धम्।**

---

श्रीमूला

रूप्यं चतुर्विधमाह—तुत्थोद्गतमिति। तुत्थोद्गतं तुत्थपर्वतजं जाति कुसुमाभम्, गौडिकं कामरूपजं तगरकुसुमवर्णम्, काम्बुकं कम्बुपर्वतोत्पन्नम्, चाक्रवालिकं चक्रवालाकरोद्भूतं तदुभयं कुन्दपुष्पाभम् इति चतुर्धा रूप्यं श्रेष्ठम्।

तस्य श्वैत्यं स्निग्धत्वं मार्दवमिति त्रीन् गुणानाह—श्वेतमित्यादि। दोषानाह—विपर्यय इति। विपर्यये दुष्टम् उक्तगुणवैपरीत्ये दोषाः कृष्णत्वरूक्षत्व-खरत्वरूपाः, स्फोटनं च दुष्टं भिद्यमानत्वं च दोष इत्याहत्य चत्वारो दोषाः। शुद्धिमाह—तद् दुष्टं रजतम्, सीसचतुर्भागेन रजतप्रमाणचतुर्भागेन सीसेन, शोधयेत्।

शुद्धस्य लक्षणमाह—उद्गतचूलिकमित्यादि। उत्थितबुद्बुदम्, स्वच्छं, रुचिमत्, दधिप्रभं च शुद्धम्।

चाणक्यटीका

( कृत्वो ? तुत्थो )द्गतमिति यत्र क्वचिद्देशे ( कृत्वा ? तुल्य ) द्रव्यवि······द्धपर्वतके भवम्। कम्बुपर्वते चक्रवालपर्वते च प्रभवं देशविशिष्टं त्रिविधमिति चतुर्विधं रूप्यम्।

विपर्यय इति श्यामं रूक्षं कठिनमित्यर्थः। तद् दुष्टं शोधयेत्॥

एवं चतुर्भागशुद्धं कथं ज्ञेयमित्याह—उद्ग( तचूलिकं )···यदूर्ध्वं बुद्बुदिकाभं शुद्धम्॥

प्रतिपदपञ्चिका

एवं सुवर्णमभिधाय चतुर्विधं रूप्यमाह—तुत्थोद्गतमित्यादि। तुत्थोद्गतं तुत्थपर्वतोत्पन्नं जतिकुसुमाभं, गौलि(डि)कं कामरूपजं तगरपुष्पाभं, काम्बुकं कम्बुपर्वतजं चाक्रवालिकं चक्रवालाकरोद्भवं तदुभयं कुन्दकुसुमोपममिति रूप्यम्।

तस्य गुणत्रयमाह—श्वेतमित्यादि। तच्च श्वेतादि प्रतीतम्।

चतुरो दोषानाह—विपर्यय इति। श्वेतादिगुणविपर्यये, कृष्णरूक्षखरा दोषाः। स्फोटनं च भिद्यमानत्वं तैर्दुष्टं भवति।

तस्य शुद्धिमाह—तदिति। तद्दुष्टं सीसचतुर्भागेन तत्प्रमाणचतुर्भागेन सीसेन शोधयेत्।

[ शुद्धस्य सुवर्णस्य षोडशवर्णकाः ]

**शुद्धस्यैको हारिद्रस्य सुवर्णो वर्णकः। ततः शुल्वकाकण्युत्तरापसारिता आचतुस्सीमान्तादिति षोडशवर्णकाः।**

---

### प्रतिपदपञ्चिका

शुद्धस्य लक्षणमाह—उद्गतचूलिकमिति उत्थितबुद्बुदमुत्थितरश्चि(श्मि)कतित्यपरे, शेषमृजु।

अर्थ शुद्धसुवर्णस्य षोडश वर्णकानाह—शुद्धस्येति। शुद्धस्य स्वभावशुद्धस्य यथोक्तविधिशोधितस्य वा, हारिद्रस्य हरिद्राभङ्गभासुरस्य सुवर्णस्य, सुवर्णः षोडशमाषप्रमाणः एकोवर्णकः शुद्धो भवति। ततः तस्मिन् वर्णके, शुल्बकाकणी शुल्बस्य ताम्रस्य काकणी माषचतुर्भागः, प्रक्षिप्तेति शेषः, उत्तरा अधिका सुवर्ण-काकणी, अपसारिता तस्माद् वर्णकाद् अपनीता च, भवति। आ कुतः इमे काकणी-प्रक्षेपापसारणे इत्यत्राह—आ चतुस्सीमान्तात् आ चतुर्माषावधेः आ षोडशकाकण्यव-धेरित्यर्थः। इति एकादिषोडशान्तानां शुल्बकाकणीनां वर्णके मिश्रणं स्वर्णकाकणीनां वर्णकादपनयनं चेत्यनया रीत्या, षोडश वर्णकाः, मिश्राः सम्पद्यन्त इति शेषः। त एते शुद्धवर्णकेन सह सप्तदश भवन्ति। इह चतुरित्यनेन काकणीग्रहणे वर्णकषोडशत्वासिद्धया तत्सिद्धये षोडशपर्यन्तकाकण्यपेक्षणात् सामर्थ्याच्चतुर्माषग्रहणं विज्ञेयम्।

### चाणक्यटीका

शुद्धपरिज्ञानार्थं वर्णकानाह—शुद्धस्यैक इति। यथोक्तशुद्धस्य एको हरिद्रा-वर्णस्य सुवर्णः षोडशमाषो वर्णकः प्रथम इत्यर्थः। ततः परं ताम्रस्य आता·····वा अथवा अपसारिता प्रमाणसुवर्णमात्रा ( आ ) चतुर्थी यावदिति ( अतेशब ? आषोडश ) परात् सीमान्तावधयो माषकाश्चत्वारः ( एष एतत् एषोवशतान्योन्तस्य ? ) षोडश-कस्य वर्णकस्य भवति। एवं चतुर्थ·····( वभव्यतो ? ) न्यूनमप्यपसारितमिति शुद्धेषु सह सप्तदश वर्णकाः कर्षप्रमाणकाः।

### प्रतिपदपञ्चिका

सम्प्रति षोडशसुवर्णवर्णकानाह—शुद्धस्येत्यादि। शुद्धस्य यथोक्तविधिना शोधितस्य स्वभावशुद्धस्य वा हारिद्रस्य सुवर्णजातेः सुवर्णषोडशमाषप्रमाणक एको वर्णः, प्रधाना वर्णिका भवति। ततस्तस्माद् वर्णकादन्ये षोडशवर्णा उत्पद्यन्ते। शुल्बका-कण्युत्तरापसारितेति शुल्वं। ताम्रं काकणी माषचतुर्भागस्तां सुवर्णे प्रक्षिप्य उत्तरा अधिका सुवर्णकाकण्यपसारिता अपनीता यदिह भवति। वीप्सा लोपश्चात्र द्रष्टव्यः।

शुल्वस्य काकणीं प्रक्षिप्य उत्तरा सुवर्णा काकणी यदा अपसारिता, अपनीता भवति। अत इत्याह—चतुस्सीमान्तादिति। सीमान्तोऽवधिः, आशुल्बचतुर्माषाव-

[ तेषां निकषैः परीक्षाः ]

**सुवर्णं पूर्वं निकष्य पश्चाद् वर्णिकां निकषयेत्। समरागलेखमनिम्नोन्नते देशे निकषितम्।**

**परिमृदितं परिलीढं नखान्तराद् वा गैरिकेणावचूर्णितं उपधिं विद्यात्।**

---

प्रतिपदपञ्चिका

धेस्तदिह काकणीग्रहणात्। षोडशवर्णकाभिधानाच्च माषकग्रहणमनुक्तमपि न्यायाल्लभ्यत इत्येवं शुद्धवर्णकेन सह एते सप्तदशवर्णका भवन्ति।

श्रीमूला

निकषच्छेदतापलक्षणां त्रिविधां वर्णकपरीक्षामाह—सुवर्णमिति। सुवर्णं परीक्ष्यम्, पूर्वं प्रथमम्, निकष्य निकषे घर्षणेन दत्तरेखं कृत्वा, पश्चाद्, वर्णिकाम्, तद्वर्णकपरीक्षार्थं निकषयेत्। निरूपाधिकं निकषितमाह—समरागेत्यादि। समरागलेखं तुल्यरागया रेखया युक्तम्, अनिम्नोन्नते देशे निकषोपलप्रदेशे, निकषितम्, न्याय्यं भवतीति शेषः।

व्याजनिकषितमाह—परिमृदितमित्यादि। परिमृदितं गाढनिकषितं वर्णकोत्कर्षार्थं विक्रेता करोति। परिलीढम् अगाढनिकषितं वर्णापकर्षार्थं क्रेता करोति, हस्तेनोन्मृष्टलीढमिति स्वामी। नखान्तराद् गैरिकेण नखान्तरनिहितेन पीतधातुना, अवचूर्णितं प्रक्षिप्तचूर्णम्, उत्कर्षार्थं विक्रेता तत्पक्ष्यो वा परीक्षकः करोति। इति त्रिविधम् उपधिं विद्यात्।

चाणक्यटीका

पूर्वं परीक्षणीयं सुवर्णं परिच्छिन्नवर्णत्वात् निकष्य पश्चात् सादृश्यं शङ्कयेत्। ······यत् शोधितं चेत् सुवर्णमतोऽधिकं निकषयेत्। न्यूनं चेन्न्यूनं यावत्समेन परिच्छिन्नमिति। एवमुक्तं च पश्चाद् भावनीयार्थं पश्चाद् ग्रहणम्। इतरथा तत्प्रत्ययेनैव क··स्यात्। निकष्येत्यन्तर्भावितण्यर्थो द्रष्टव्यः, निकषयेदित्युत्तरपाठानुमानात्। निकषप्रमाणं समरागलेखमिति आदिमध्यावसानेषु समरागा लेखा यस्य। देशे पाषाणे। तदपि नि ( क ) ष्य पुनर्मृदितं मृष्टमित्यर्थः। परिलीढं निकषकाल एवाङ्गुल्या उद्गच्छन्त्या प्रमृष्टम्। तदुभयमपकर्षार्थम्। नखान्तराद्वा गैरिकेण अवचूर्णितम् उत्कर्षार्थमवचूर्ण्य। परिनिकर्षतर्षितः ? ) एतद्द्विविधम् उपधिं व्याजनिकषं विद्यात्।

प्रतिपदपञ्चिका

तत्परिज्ञानार्थं निकषच्छेदतापलक्षणां त्रिविधां परीक्षामाह—सुवर्णं पूर्वं निकृष्येत्यादि।

सुवर्णं परीक्षणीयं पूर्वं प्रथमं निकृष्य ततः पश्चाद्वर्णकं तत्परिच्छेदाय वर्णिकां निकषयेत्।

**जातिहिङ्गुलकेन पुष्पकासीसेन वा गोमूत्रभावितेन दिग्धेनाग्रहस्तेन संस्पृष्टं सुवर्णं श्वेतीभवति ।**

**सकेसरः स्निग्धो मृदुः भ्राजिष्णुश्च निकषरागः श्रेष्ठः ।**

---

प्रतिपदपञ्चिका

निरुपाधिकं निकर्षितमाह—समरागलेखमित्यादि, समरागा तुल्यरागा रेखा यस्मिन् तत् अनिम्नोन्नते समे देशे निकषपाषाणप्रदेशिनि(क)षितं सच्छद्म विद्यादिति वाक्यशेषः ।

सोपाधिकमाह—परिमृदितमिति । अवष्टभ्यं निक्षिप्तं तदुत्कर्षार्थं विक्रेता करोति । परिलीढं हस्तेनोन्मृष्टलीढं तदपकर्षार्थं क्रेता करोति । नखान्तराद् वेति पूर्वं नखान्तर-निहितेन सुवर्णं गैरिकाख्येन धातुविशेषेणापचूर्णितं तदुत्कर्षार्थं विक्रेता तदभ्यर्थितो वा परीक्षकः करोति । एवं त्रिविधमुपधिच्छद्म विद्यात् ।

श्रीमूला

उपधिमन्यमाह—जातीत्यादि । गोमूत्रभावितेन जातिहिङ्गुलकेन हंसपादा-ख्यहिङ्गुलकविशेषेण, पुष्पकासीसेन वा किञ्चित्पीतवर्णेन हरितालेन वा, दिग्धेन लिप्तेन, अग्रहस्तेन, संस्पृष्टं, सुवर्णं, श्वेतीभवति हीनवर्णं भवति । अयं क्रेतृप्रयोज्यो व्याजः ।

गुणानाह—सकेसर इति । सकेसरः बहुलकेसरः, स्निग्धो, मृदुः भ्राजिष्णुश्च, निकषरागः निकषरेखावर्णः, श्रेष्ठः ।

चाणक्यटीका

अपरं निपुण( रिपु ? मुपधि )माह—जातिहिङ्गुलकेनेति । जातिपुष्पयोर्ग्रहण-मन्यनिवृत्त्यर्थम् । तयोरन्यतरेण गोमूत्रभावितेन ( यो ? दिग्धेन ) अग्रहस्तेन स्पृष्टम् ॥

शोभ··( सके ) सरः केसरा इव ( रावातो ? ) बहिर्गता यस्य । मृदुः पाषाणलेपित्वादपि ( तत् ? ) ॥

प्रतिपदपञ्चिका

पुनरपरं क्रेतृप्रयोज्यमेव उपधिमाह—जातिहिङ्गुलिकेन सह सपदाख्यहिङ्गुलक-विशेषेण पुष्पकासीसेन धातुकासीसेन यद्वा पुष्पं पारत( द )ल्कासीसं वत्तरागद्रव्यं तयोः गोमूत्रभावितयोरन्यतरदिग्धेन लिप्तेनाग्रहस्तेनाङ्गुलीभिः स्पृष्टं सुवर्णं हेम श्वेती-भवति । अपकृष्टवर्णं भवति ।

निकर्षणगुणानाह—सकेसर इति । सकेसरो बहलपक्ष्मलः, स्निग्धादयः प्रतीताः, निकषरागो निकषरेखावर्णः, श्रेष्ठ उत्तमः ।

[ निकषगुणाः ]

**कालिङ्गकः तापीपाषाणो वा मुद्गवर्णो निकषः श्रेष्ठः। समरागि विक्रयक्रयहितः। हस्तिच्छविकः सहरितः प्रतिरागी विक्रयहितः। स्थिरः परुषो विषमवर्णश्चाप्रतिरागी क्रयहितः।**

[ तेषां छेदैः तापैश्च परीक्षाः ]

**छेदः चिक्कणः समवर्णः श्लक्ष्णो मृदुर्भ्राजिष्णुश्च श्रेष्ठः।**

**तापे बहिरन्तश्च समः किञ्जल्कवर्णः कारण्डकपुष्पवर्णो वा श्रेष्ठः। श्यावो नीलश्चाप्राप्तकः ॥**

---

श्रीमूला

निकषगुणमाह—कालिङ्गक इति। कालिङ्गकः कलिङ्गदेशे महेन्द्रपर्वतादुत्पन्नः पाषाणः, तापीपाषाणो वा तापी नाम आरट्टदेशवाहिनी नदी, तद्गतः पाषाणो वा, मुद्गवर्णो निकषः श्रेष्ठः। समरागी यथास्थितवर्णग्राही, विक्रयक्रयहितः क्रेतृविक्रेत्रोरुभयोरप्यनुकुलः। हस्तिच्छविकः गजचर्मवत् खरशुष्कः, सहरितः हरितवर्णयुक्तः, प्रतिरागी अपकृष्टस्यापि सुवर्णस्य रागोत्कर्षप्रदर्शकः, विक्रयहितः विक्रेतुरनुकूलः। स्थिरः दृढः, परुषः खरः, विषमवर्णः नानावर्णश्च, अप्रतिरागी उत्कृष्टस्यापि सुवर्णस्य यथास्थितरागाप्रदर्शकः निकषः, क्रयहितः क्रेतुरनुकूलः।

निकषमुक्त्वा छेदमाह—छेद इति। छेदः छिन्नः स्वर्णखण्डः। चिक्कणः स्निग्धः, समवर्णः बहिरन्तश्च तुल्यवर्णः, श्लक्ष्णः मसृणः, मृदुः भ्राजिष्णुश्च श्रेष्ठः।

अथ तापमाह—ताप इति। अग्नितापितः स्वर्णभागः, बहिरन्तश्च समः समानवर्णः, तापनात् पूर्वं पश्चाच्च किञ्जल्कवर्णः, कुरण्डकपुष्पवर्णो वा अम्लानकुसुमवर्णो वा, श्रेष्ठः। श्यावः कपिशः, नीलश्च, अप्राप्तकः तत्संज्ञः अशुद्ध इति यावत्।

चाणक्यटीका

कालिङ्गकः कलिङ्गदेशभवः। तापी नदी महाराष्ट्रीया[1] मुद्गवर्णः उभयो निकषः निकष्यतेऽस्मिन्निति। समरागी ( नामपि मलिनोज्ज्वलरागः ? )। सहरितः परभागं करोति। प्रतिरागी हीनस्याविशेषेण रञ्जयिता। स्थिरः कठिनत्वात् सुवर्णस्यातिलेपी परुषः स्वभावात् परुषयिता। विषमवर्णः नानावर्णत्वाद् इदम् ईदृशमित्यनिश्चयकारी। अप्रतिरागी शोभनस्याप्रतिरञ्जयिता ( वित्कं नो मधूः ? )······।

अन्तर्बहिश्च श्लक्ष्णो मसृणः समः सदृशवर्णः। अप्राप्तको लोहान्तरसंसृष्ट इत्यर्थः।

---

१. आरट्टदेशवाहिनीति केरलभाषाटीका।

[ रूप्यसुवर्णव्यवहारोपयोग्युन्मानविधिः ]

**तुलाप्रतिमानं पौतवाध्यक्षे वक्ष्यामः । तेनोपदेशेन रूप्यसुवर्णं दद्यादाददीत च ।**

[ सुवर्णादिपरिकर्मस्थानरक्षणविधिः ]

**अक्षशालाम् अनायुक्तो नोपगच्छेत् । अभिगच्छन् उच्छेद्यः । आयुक्तो वा सरूप्यस्वर्णस्तेनैव जीयेत ।**

**विचितवस्त्रहस्तगुह्याः काञ्चनपृषतत्वष्टृतपनीयकारवो ध्मायकचरकपांसुधावकाः प्रविशेयुः निष्कसेयुश्च ।**

---

श्रीमूला

अथ रूप्यसुवर्णयोरुन्मानविध्यपेक्षायामाह—तुलेत्यादि । तुलाप्रतिमानं तुलापरिच्छेदविधिम् पौतवाध्यक्षे तुलामानपौतवप्रकरणे, वक्ष्यामः । इयमनागतावेक्षणरूपा तन्त्रयुक्तिः । तेनोपदेशेन तत्प्रकरणोक्तमानविधिना, रूप्यसुवर्णम्, दद्याद्, आददीत च गृह्णीयाच्च ।

पालनविधिमाह—अक्षशालामिति । अक्षशालाम्, अनायुक्तः अनधिकृतः, नोपगच्छेत् । अभिगच्छन् वारितोऽप्यभिमुखं गच्छन्, उच्छेद्यः हृतसर्वस्वः कर्तव्यः । आयुक्तो वा नियुक्तोऽपि वा सरूप्यस्वर्णः रूप्यस्वर्णसहितो, गच्छन् तेनैव रूप्येण स्वर्णेन च जीयेत दण्डयेत् ।

विचितेत्यादि । विचितवस्त्रहस्तगुह्याः वस्त्रं हस्तो गुह्यं च विचितं रूप्यस्वर्णयुक्तं न वेति परीक्षितं येषां ते तथाविधाः भूत्वा, काञ्चनपृषतत्वष्टृतपनीयकारवः काञ्चनकारवः रसवेधस्वर्णीकरणशिल्पिनः पृषतकारवो गुलिकादिसूक्ष्मशिल्पकारिणः त्वष्टृकारवः पट्टपात्रादिशिल्पिनः तपनीयकारवः नानाजातीयभूषणशिल्पिनश्च, ध्मायकचरकपांसुधावकाः भस्त्राध्मायकाः परिचारकाः धूलिशोधकाश्च, प्रविशेयुः अक्षशालां निष्कसेयुश्च ततो निर्गच्छेयुश्च ।

चाणक्यटीका

पौतवाध्यक्षे वक्ष्यामः । सुवर्णपरीक्षा प्राप्तापि बाह्यत्वात् अनेकार्थत्वाच्च । तेनोपदेशेनेति यथोक्तेन·····येण वक्ष्यमाणेन तुलाप्रतिमानेन दद्यात् कर्मार्थं कारुभ्यः । निष्पन्नञ्च आददीत असंभवात् ( ? ) । स्वर्णवदेव रूप्यस्येति रूप्यग्रहणेन ज्ञापयति ॥

उच्छेद्य इति । अपरिजिहीर्षयोपदेशेन·····सर्वस्वमाहार्य इत्यन्ये । सरूप्यसुवर्ण इति । आत्मीयरूप्यसुवर्ण इति । आत्मीयरूप्यसुवर्णस्तेनैव तद्द्रव्येण जीयेत तदेवास्यापह्रियेत इत्यर्थः । परिवर्तयितुकामत्वादस्येति ॥

सर्वं चैषामुपकरणमनिष्ठिताश्च प्रयोगास्तत्रैवावतिष्ठेरन् । गृहीतं सुवर्णं धृतं च प्रयोगं करणमध्ये दद्यात् । सायं प्रातश्च लक्षितं कर्तृकारयितृमुद्राभ्यां निदध्यात् ।

---

### चाणक्यटीका

विचितवस्त्रगुह्या इति । विचितं वस्त्रं गुह्यञ्च मुखकर्णरन्ध्रादीनि येषामिति । काञ्चनकारवः क्षेपणकारवः । अन्येषां कर्मणां स्वशब्देनाभिधानम् । पृषतत्वष्टृतपनीयकारव इति । ( मरकारौशकीरादिस्सूदादि··? ध्मायकाः सरकपांसुधावकाः[1] । ये पांसून् सुवर्णमिश्रान् जलेन क्षालयन्ति तेषां प्रविशतां यदि सुवर्णादि दृश्यते, तदा यथानुरूपो दण्ड इत्यर्थादापन्नम् ॥

### श्रीमूला

सर्वं चेति । एषां कारुप्रभृतीनां, सर्वम् उपकरणम्, अनिष्ठिताः प्रयोगाश्च असमाप्तानि शिल्पानि च, तत्रैव अवतिष्ठेरन् अक्षशालातो बहिर्न नीयेरन् । गृहीतमति । गृहीतं भाण्डागाराद् आत्मनोपात्तं सुवर्णं, प्रयोगं च यत्र सुवर्णं प्रयुक्तं तं पदार्थं च, करणमध्ये धृतं दद्यात्, करणानां राजलेखकानां स्वस्वपुस्तकेष्वर्थं लिखतां साक्षिभूतानां मध्ये तुलाधृतं कृत्वा प्रत्यर्पयेत्, अर्थात् सुवर्णाध्यक्षः । सायं प्रातश्च दैनन्दिनव्यापारस्यावसाने प्रारम्भे च, कर्तृकारयितृमुद्राभ्यां लक्षितं कर्तृकारयित्रोः सौवर्णिकसुवर्णाध्यक्षयोर्मुद्राभ्यां चिह्नितम् स्थापयेत्, सुवर्णम् । करणमध्य इत्येव ।

### चाणक्यटीका

उपकरणं भस्त्रासन्दंशादि । अनिष्ठितान्·····प्रयोगा इति प्रयुज्यमानान्यलङ्कारभाण्डानि । तत्रैव अक्षशालायाम् । तिष्ठेयुः आपरिसमाप्तेरिति ॥

गृहीतं कोशागारात् । करणमध्य एवाध्यक्षः (तं रुष्यो ?) दद्यात् । धृतञ्चेति परी·····पणकाचार्पणादि । (अ) निष्पन्नं करणमध्य एवार्पयेद् राज्ञ इति । लक्षितं विदितं विदध्यात् । प्रातःकरणमध्ये कर्तुम् । सायमक्षशालायामिति ॥

### प्रतिपदपञ्चिका

पालनविधिमाह—सायं प्रातश्च रात्र्यादौ प्रत्युषसि च लक्षितं चिह्नितं कर्तृकारयितृमुद्राभ्यां सुवर्णकाराध्यक्षमुद्राभ्यां निदध्यात् स्थापयेत् । करणमध्य इति वर्तते ।

---

१. "सरकपांसुधावकाः सारत्रिभागं लभेरन्" इति कारुकरक्षणे वक्ष्यते । 'सरकोऽस्त्री मणौ' इति केशवस्वामी ।

